हरिदास संस्कृत ग्रन्थमाला २०९

लक्षणटिप्पणीसहित-

# तर्कसंग्रहः

'पदकृत्य' 'इन्दुमती' व्याख्योपेतः



चौखम्बा संस्कृत सीरोज आफिस
वाराणसी—१

श्री हरिदास संस्कृत ग्रन्थमाला २०९

श्रीमदन्नम्भट्टविरचितः

# तर्कसंग्रहः

लक्षणटिप्पणीसहित–

सपदकृत्य-इन्दुमती-व्याख्योपेतः

व्याख्याकारः

पं० रामचन्द्रझा व्याकरणाचार्यः

टिप्पणीकारः

पं० राजनारायणशास्त्री [illegible]चार्यः



चौखम्बा संस्कृत सीरीज ऑफिस, वाराणसी

१९७२

|| श्रीः ||

# तर्कसंग्रहः

## सटिप्पण-सपदकृत्य-इन्दुमती-व्याख्योपेतः



निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।
बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥

❀ पदकृत्यम् ❀

श्रीगणेशं नमस्कृत्य पार्वतीशङ्करं परम् ।
मया चन्द्रजसिंहेन क्रियते पदकृत्यकम् ॥ १ ॥
यस्मादिदमहं मन्ये बलानामुपकारकम् ।
तस्माद्धितकरं वाक्यं वक्तव्यं विदुषा सदा ॥ २ ॥

---

नमस्कृत्य शिवं साम्बं गुरुपादानुकम्पया ।
राजनारायणः शुक्लस्तर्कसंग्रहटिप्पणीम् ॥ १ ॥
तन्वे यथाधि संक्षिप्तां छात्राणां हितकाम्यया ।
परीक्षापाशबद्धानां नालघुं सारवत्तराम् ॥ २ ॥

१. निधायेति–निधाय हृदि विश्वेशमित्यत्र निपूर्वकधाधातोर्ध्यां-

विश्वेशं जगत्कर्तारं श्रीसाम्बमूर्तिं हृदि मनसि निधाय नितरां धारयित्वा, गुरुवन्दनं च विधाय कृत्वेत्यर्थः। बालेति। अत्राधीतव्याकरणकाव्यकोशोऽनधीतन्यायशास्त्रो बालः। व्यासादावतिव्याप्तिवारणायाऽनधीतन्यायेति। स्तनन्धयेऽतिप्रसक्तिवारणायाऽधीतव्याकरणेति। सुखेति। सुखेनानायासेन बोधाय पदार्थतत्त्वज्ञानायेत्यर्थः। तर्क्यन्ते प्रमितिविषयीक्रियन्ते इति तर्का द्रव्यादिपदार्थास्तेषां संग्रहः सङ्क्षेपेणोद्देशलक्षणपरीक्षा यस्मिन् स ग्रन्थः। नाममात्रेण वस्तुसङ्कीर्तनमुद्देशः, यथा द्रव्यं गुणा इति। असाधारणधर्मो लक्षणम्, यथा गन्धवत्त्वं पृथिव्याः। लक्षितस्य लक्षणं सम्भवति न वेति विचारः परीक्षा। अत्रोद्देशस्य पक्षज्ञानं फलं, लक्षणस्येतरभेदज्ञानं, परीक्षाया लक्षणे दोषपरिहार इति मन्तव्यम् ॥ १ ॥

❀ इन्दुमती टीका ❀

रामचन्द्रं नमस्कृत्य रामचन्द्रेण धीमता।
मनसीन्दुमतीं ध्यात्वा रचितेन्दुमती मुदा ॥

हृदयमें जगत्कर्ता श्रीजगदीश्वरको धारणकर तथा

---

नमर्थः, ल्यप उत्तरकालिकत्वमर्थः, हृत्पदम्मनःपरम् 'स्वान्तं हृन्मानसं मनः' इति कोशात्। अधिकरणत्वं सप्तम्यर्थः, विश्वस्य ईश इत्यत्र

श्रीगुरुचरणकी वन्दना करके न्यायशास्त्रमें अनभिज्ञ बालकोंको अनायासेन ( न्यायवैशेषिक शास्त्रके पदार्थोंका ) ज्ञान होनेके लिए ) हम ( अन्नंभट्ट ) इस तर्कसंग्रह नामक ग्रन्थकी रचना करते हैं ॥

---

षष्ठ्या निरूपितत्वमर्थः, ईशशब्दस्य नियामकतावानर्थः। निरूपितत्वस्य स्वरूपसम्बन्धेन नियामकतायामन्वयः। ईशमित्यत्र द्वितीयार्थःकर्मत्वं विषयतारूपम्, सविषयार्थबोधकधातुसमभिव्याहृतद्वितीयार्थीभूतकर्मत्वं विषयतारूपमिति न्यायात्। धाधात्वर्थध्याने निरूपकत्वसम्बन्धेन हृच्छब्दोत्तरवर्त्तिसप्तम्यर्थीभूताधिकरणत्वस्यान्वयः। एवञ्च हृदधिकरणकविश्वनिरूपितकारणतावद्विषयकध्यानोत्तरकालिकीति फलितम्।

विधाय गुरुवन्दनमित्यत्र विपूर्वकधातोर्विधानमर्थः, ल्यप उत्तरकालिकत्वम्। गुरूणां वन्दनमित्यत्र षष्ठ्याः कर्मत्वम्, द्वितीयाया विषयत्वम्, यस्य धाधात्वर्थीभूतकृतौ निरूपकत्वसम्बन्धेनान्वयः।

एवञ्च गुरूद्देश्यकवन्दनविषयककृत्युत्तरकालिकीति। बालानामित्यत्र षष्ठ्यास्समवेतत्वमर्थः। सुखबोधोऽनायासपूर्वकपदार्थतत्त्वज्ञानम्। चतुर्थ्याः प्रयोजकत्वम्। एवञ्च बालसमवेतानायास-

## [ १ ] उद्देशप्रकरणम् ।

[१]पदार्थाः कति कानि च तेषां नामानि ?

द्रव्य[२]-गुण[३]-कर्म[४]-सामान्य[५]-विशेष[६]-समवाया-

---

पूर्वकबोधफलकेति । क्रियत इत्यत्र मयेत्यध्याहार्यम्, समवेतत्वन्तृतीयार्थः, कृधातोः, कृतिरर्थः, आख्यातस्य वर्त्तमानकालिकत्वम् विषयत्वञ्चार्थः समवेतत्वस्य च कृतावन्वयः, कृतेर्निरूपितत्वसम्बन्धेन विषयतायाम्, विषयतायाश्च स्वरूपसम्बन्धेन तर्कसंग्रहेऽन्वयः, एवञ्चाखण्डशाब्दबोधः-हृदधिकरणकविश्वनिरूपितकारणतावद्विषयकध्यानोत्तरकालिकी गुरूद्देश्यकवन्दनविषयकृत्युत्तरकालिकी बालसमवेतानायासपूर्वकपदार्थतत्त्वज्ञानफलिका अन्नम्भट्टसमवेता वर्त्तमानकालिकी या कृतिः तादृशकृतिविषयः तर्कसंग्रहः ।

१. पदार्थत्वञ्च-पदजन्यप्रतीतिविषयत्वम् । अभिधेयत्वम्प्रमेयत्वम्पदशक्यत्वं वाच्यत्वादि वा पदार्थसामान्यलक्षणम् २. समवायसम्बन्धेन गुणक्रियावत्त्वं द्रव्यसामान्यलक्षणम् । द्रव्यत्वजातिमत्त्वं वा । ३. समवायेन गुणत्वजातिमत्त्वं गुणसामान्यलक्षणम् । ४. कर्मत्वजातिमत्त्वं कर्मसामान्यलक्षणम् । ५. नित्यत्वे सति संयोगभिन्नत्वे सति बहुसमवेतत्वं जातिसाधारणलक्षणम् । ६. स्वतो व्यावर्त्तकत्वं विशेषसामान्यलक्षणम् । निस्सामान्यत्वे सति जातिभिन्नत्वे सति समवेतत्वं वा ।

[1]ऽभावाः [2]सप्त पदार्थाः।

पदार्थ सात हैं—द्रव्य, गुण, कर्म, सामान्य, विशेष, समवाय और अभाव।

द्रव्याणि कति, कानि च तानि?

तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव।

तत्रेति। तत्र सप्तपदार्थमध्ये इत्यर्थः। द्रव्याणि नवैवेत्यन्वयः। एवं तत्रेतिपदं चतुर्विंशतिर्गुणा इत्यादिनाऽप्यन्वेति। द्रव्यत्वजातिमत्त्वं गुणवत्त्वं समवायिकारणत्वं वा द्रव्यसामान्यलक्षणम्।

उक्त द्रव्यादि सातों पदार्थों में—पृथिवी, जल, तेज, वायु, आकाश, काल, दिशा, आत्मा और मन ये नव ही द्रव्य हैं।

---

१. सम्बन्धप्रतियोग्यनुयोगिभिन्नत्वे सति नित्यत्वे सति विशिष्टबुद्धिनियामकत्वं (सम्बन्धत्वं) समवायस्य लक्षणम्। २. नञ्पदजन्यप्रतीतिविषयत्वं भावभिन्नत्वं वा अभावसामान्यलक्षणम्। वस्तुतस्तु अभावत्वमखण्डोपाधि (

कति गुणाः, के च ते ?

रूप-रस-गन्ध-स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्म-संस्काराश्चतुर्विंशतिर्गुणाः ।

'गुण' चौबीस प्रकार के होते हैं—रूप, रस, गन्ध, स्पर्श, संख्या, परिमाण, पृथक्त्व, संयोग, विभाग, परत्व, अपरत्व, गुरुत्व, द्रवत्व, स्नेह, शब्द, बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म, अधर्म और संस्कार ।

कियन्ति कर्माणि कानि च तानि ?

उत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि ।

'कर्म' पांच प्रकारके होते हैं—उत्क्षेपण ( ऊपरकी ओर फेंकना ), अपक्षेपण ( नीचेकी ओर फेंकना ), आकुञ्चन ( एकत्र करना ), प्रसारण (फैलाना) और गमन (चलना) ।

सामान्यं कतिविधम् ?

परमपरं चेति द्विविधं सामान्यम् ।

परमपरं चेति । परसामान्यमपरसामान्यमित्यर्थः । परत्वं चाधिकदेशवृत्तित्वम् । अपरत्वं न्यूनदेशवृत्तित्वम् ।

तदेव हि लक्षणं यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रय-शून्यम्, यथा गोः सास्नादिमत्त्वम् । अव्याप्तिश्च लक्ष्यैकदेशा-वृत्तित्वम्, अत एव गोर्न कपिलत्वं लक्षणं तस्याव्याप्तिग्रस्त-त्वात् । अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्, असम्भवश्च लक्ष्यमात्रावृत्तित्वम् । यथा गोरेकशफवत्त्वं न लक्षणं तस्यासम्भवग्रस्तत्वात् ।

सामान्य दो तरह के हैं—पर सामान्य और अपर सामान्य ( अधिक देश में जो रहता है वह 'परसामान्य' कहाता है । जैसे—द्रव्यत्वकी अपेक्षासे सत्ता । थोड़े देश-में जो रहता है वह 'अपरसामान्य' कहाता है । जैसे—सत्ताकी अपेक्षासे द्रव्यत्व । )

कियन्तो विशेषाः ?

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

नित्येति । ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वं नित्य-

त्वम् । ध्वंसेऽतिव्याप्तिवारणाय ध्वंसभिन्नेति विशेषणम् । घटादावतिव्याप्तिवारणाय विशेष्यदलम् । ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं वाऽनित्यत्वम् ।

'विशेष' केवल नित्यद्रव्यों में रहता है और वह अनन्त है ।

( पृथिवी, जल, तेज और वायुके परमाणु तथा आकाश, काल, दिशा, आत्मा और मन ये सब नित्य द्रव्य हैं । )

समवायः कतिविधः ?

समवायस्त्वेक एव ।

'समवाय' ( नित्य सम्बन्ध ) एक ही है ।

अभावः कतिविधः ?

अभावश्चतुर्विधः—प्रागभावः प्रध्वंसाऽभावोऽत्यन्ताभावोऽन्योन्याऽभावश्चेति ।

'अभाव' चार प्रकार के हैं—प्रागभाव, प्रध्वंसाभाव, अत्यन्ताभाव और अन्योन्याभाव ।

## [ २ ] द्रव्यलक्षणप्रकरणम् ।

पृथिव्याः किं लक्षणं, कति च भेदाः ?

तत्र गन्धवती पृथिवी[१]। सा द्विविधा-नित्या[२]ऽनित्या[३] च। नित्या-परमाणुरूपा। अनित्या कार्यरूपा। पुनस्त्रिविधा शरीरेन्द्रियविषयभेदात्। [४]शरीरमस्मदादीनाम्। [५]इन्द्रियं गन्धग्राहकं घ्राणं नासाग्रवर्ति। विषयो[६] मृत्पाषाणादि।

शरीरेति। यद्भोगायतनं तदेव शरीरं, चेष्टाश्रयो वा। इन्द्रियमिति। चक्षुरादावतिव्याप्तिवारणाय गन्धग्राहकमिति। कालादावतिप्रसक्तिवारणायेन्द्रियमिति। विषय इति। शरीरेन्द्रियभिन्नत्वे सत्युपभोगसाधनं विषयः। शरीरादावतिव्याप्तिनिरासाय सत्यन्तम्। परमाण्वादावतिव्याप्तिवारणाय विशेष्यदलम्। कालादिवारणाय जन्यत्वे सतीत्यपि बोध्यम्।

---

१. समवायसम्बन्धेन गन्धवत्त्वम् पृथिवीलक्षणम्। अथवा-गन्धसमानाधिकरणद्रव्यत्वव्याप्य (पृथिवीत्व) जातिमत्त्वम्। २. ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वम्। ३. ध्वंसप्रतियोगित्वम् प्रागभावप्रतियोगित्वं वाऽनित्यत्वम्। ४. अन्त्यावयवित्वे सति चेष्टाश्रयत्वं शरीरस्य लक्षणम्। ५. शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियसामान्यलक्षणम्। ६. शरीरेन्द्रियभिन्नत्वे सति उपभोगसाधनत्वम् विषयत्वम्।

पृथिवी आदि द्रव्योंमें गन्धवाले द्रव्यका नाम 'पृथिवी' है ( पृथिवीमें समवाय सम्बन्धसे गन्ध रहती है )। वह पृथिवी दो तरह की है—नित्य और अनित्य। नित्य पृथिवी वह है जो परमाणुरूप है और अनित्य पृथिवी वह है—जो घट-पट आदि कार्यरूप है। पुनः वह कार्यरूप अनित्य पृथिवी भी तीन प्रकार की है—शरीर, इन्द्रिय और विषय इस भेदसे। उदाहरण जैसे—हमलोगोंका शरीर, पार्थिव शरीर है। गन्धको ग्रहण करनेवाली घ्राणेन्द्रिय पार्थिव इन्द्रिय है, जो नासिकाके अग्रभाग ( चोटी ) पर विराजमान है। मृत्तिका, पत्थर, घट-पट आदि सभी पदार्थ पार्थिव विषय हैं।

जलस्य किं लक्षणं, कति च भेदाः ?

[1]शीतस्पर्शवत्य आपः। ता द्विविधाः—नित्या अनित्याश्च। नित्याः परमाणुरूपाः। अनित्याः [2]कार्यरूपाः। पुनस्त्रिविधाः—शरीरेन्द्रियविषयभेदात्। शरीरं

१. समवायसम्बन्धेन शीतस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वं वा जलसामान्यलक्षणम्। २. सावयवत्वम् अनित्यत्वं, प्रागभावप्रतियोगित्वं वा कार्यस्य लक्षणम्।

वरुणलोके। इन्द्रियं रसग्राहकं रसनं जिह्वाग्रवर्ति। विषयः सरित्समुद्रादिः।

शीतेति। तैजसादावतिव्याप्तिवारणाय शीतेति। आकाङ्क्षावारणाय स्पर्शेति। कालादावतिप्रसक्तिवारणाय समवायसम्बन्धेनेति पदं देयम्। इन्द्रियमिति। त्वगादावतिव्याप्तिवारणाय रसग्राहकमिति। रसनेन्द्रियरससन्निकर्षादावतिव्याप्तिनिरासायेन्द्रियमिति। सरिदिति। आदिना तडागहिमकरकादीनां संग्रहः।

'जल' वही कहलाता है—जिसका स्पर्श शीतल (ठण्डा) हो। वह जल दो प्रकार का है—नित्य और अनित्य। परमाणुरूप जल नित्य और कार्यरूप जल अनित्य है। पुनः वह कार्यरूप जल शरीर, इन्द्रिय और विषयके भेद से तीन प्रकारका है। वरुणलोक में निवास करनेवालेका शरीर जलका है। जीभके अग्रभागपर रहकर मधुर आदि रसको ग्रहण करनेवाली इन्द्रिय 'रसना' है और वही जलीय इन्द्रिय है। नदी, तालाब, समुद्र, कूप आदि जलीय विषय है।

तेजसः किं [1]लक्षणं, कति च भेदाः ?

उष्णस्पर्शवत्तेजः तच्च द्विविधं—नित्यमनित्यं च। नित्यं परमाणुरूपम्। अनित्यं कार्यरूपम्। पुनस्त्रिविधं—शरीरेन्द्रियविषयभेदात्। शरीरमादित्यलोके प्रसिद्धम्। इन्द्रियं रूपग्राहकं[2] चक्षुः कृष्णताराग्रवर्ति। विषयश्चतुर्विधो भौमदिव्योदर्याकरजभेदात्। भौमं वह्न्यादिकम्। अविन्धनं दिव्यं विद्युदादि। भुक्तस्य परिणामहेतुरुदर्यम्। आकरजं सुवर्णादि।

उष्णेति। जलादावतिव्याप्तिनिरासायोष्णेति। कालादावतिप्रसङ्गवारणाय समवायसम्बन्धेनेति पदं देयम्। इन्द्रियमिति। घ्राणादावतिव्याप्तिवारणाय रूपग्राहकमिति। भेदादितिपदं प्रत्येकमभिसम्बध्यते। भौममिति। आदिपदेन भुक्तेति। भुक्तस्यान्नादेः पीतस्य जलस्य परिणामो जीर्णता

१. लक्षणत्वञ्च–असाधारणधर्मत्वम्। केवलान्वयिभिन्नत्वे सति अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यत्वे सति लक्ष्यतावच्छेदकसमनियतत्वं वा। २. समवायसम्बन्धेन उष्णस्पर्शवत्त्वम्, उष्णस्पर्शसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वम् वा। ३. ग्राहकत्वञ्च—प्रत्यक्षजनकत्वम्।

तस्य हेतुरुदर्यमित्यर्थः । सुवर्णेति । आदिना रजतादि-परिग्रहः ।

'तेज' वही कहलाता है—जिसमें उष्ण ( गर्म ) स्पर्श हो । तेज भी दो तरहका होता है—नित्य और अनित्य । परमाणुरूप तेज नित्य है और कार्य ( वह्नि आदि ) रूप तेज अनित्य है । पुनः कार्यरूप अनित्य तेज शरीर, इन्द्रिय और विषय के भेद से तीन प्रकार का है । तैजस-शरीर आदित्य ( सूर्य ) लोक में है । रूपका प्रत्यक्ष ( ज्ञान ) करानेवाली चक्षुरिन्द्रिय जो नेत्र के अन्दर काली पुतली ( कृष्ण तारा ) के अग्रभाग में रहती है, वही तैजस-इन्द्रिय है । तैजस-विषय चार प्रकार के हैं—भौम, दिव्य, उदर्य और आकरज ।

अग्नि आदि' भौम' तेज है, क्योंकि वह भूमि से उत्पन्न होता है । जलसे प्रादुर्भूत होने वाली बिजली 'दिव्य' तेज है । खाई हुई वस्तुओं को पचानेवाली पेटकी अग्नि 'उदर्य' तेज है । खानोंसे उत्पन्न सुवर्ण, रजत, आदि 'आक-रज' तेज है ।

वायोः किं लक्षणं कति च भेदाः ?

रूपरहितः[1] स्पर्शवान् वायुः[2] । स द्विविधः-नित्योऽनित्यश्च । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः—शरीरेन्द्रियविषयभेदात् । शरीरं वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् सर्वशरीरवर्ति । विषयो वृक्षादिकम्पनं हेतुः । [3]शरीरान्तःसञ्चारी वायुः प्राणः । स चैकोऽप्युपाधिभेदात् [4]प्राणापानादिसंज्ञां लभते ।

रूपेति । घटादिवारणाय विशेषणम् । आकाशादिवारणाय विशेष्यम् । इन्द्रियमिति । चक्षुरादिवारणाय स्पर्शग्राहकमिति । कालादावतिव्याप्तिवारणायेन्द्रियमिति । वृत्तेति । आदिपदेन जलादिपरिग्रहः । शरीरान्तरिति । महावाय्वादावतिव्याप्तिवारणाय विशेषणम् । मन आदि वारणाय

१. सामानाधिकरण्यसम्बन्धे रूपत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टस्पर्शवत्त्वं वायुसामान्यलक्षणम् । २. स्पर्शवत्त्वं-स्पर्शसमानाधिकरणद्रव्यविभाजकजातिमत्त्वम् । ३. शरीरान्तःसञ्चारित्वे सति वायुत्वम्प्राणवायोर्लक्षणम् । ४. हृदि प्राणो गुदेऽपानस्समानो नाभिदेशगः । उदानः कण्ठदेशस्थो व्यानस्सर्वशरीरगः ।

विशेष्यम्। धनञ्जयवारणाय सञ्चारीति। उपाधीति। मुखनासिकाभ्यां निर्गमनप्रवेशनात्प्राणः, जलादेरधोनयनादपानः, भुक्तपरिणामाय जाठरानलस्य समुन्नयनात्समानः, अन्नादेरूर्ध्वंनयनादुदानः। नाडीमुखेषु विततनाद् व्यानः, इति क्रियारूपोपाधिभेदात्तथा व्यवह्रियत इत्यर्थः।

वायु वही कहलाता है—जो आकृतिसे रहित और स्पर्शवान् हो। वह वायु दो तरह का है—नित्य और अनित्य। नित्य वायु परमाणु-स्वरूप है और अनित्य वायु कार्य-स्वरूप है। पुनः कार्यरूप अनित्य वायु भी तीन प्रकारका है—शरीर, इन्द्रिय और विषय इस भेदसे। वायवीय शरीर वायुलोकमें है। वायवीय इन्द्रिय त्वगिन्द्रिय है, जो समस्त शरीरमें वर्तमान है और जिससे उष्ण- शीतल आदि स्पर्शका प्रत्यक्ष होता है। वृक्ष आदिको हिलाने वाला वायु 'विषय' है। शरीरके अन्दर संचार करने वाला वायु 'प्राण' है और वह एक ही है; किन्तु हृदय, उदर आदि स्थानोंके भेद से पाँच प्रकारका कहलाता है। जैसे—प्राण-वायु, अपान-वायु, समान-वायु और व्यान-वायु।

आकाशस्य किं लक्षणं कतिविधं च तत् ?

[1]शब्दगुणकमाकाशम् । तच्चैकं[2] विभु नित्यं च ।

शब्देति । शब्दो गुणो यस्य तत्तथा । असम्भववारणाय शब्दगुणोभयम् । विभ्विति । सर्वमूर्तद्रव्यसंयोगीत्यर्थः ।

'आकाश' वह है, जिसमें समवायसम्बन्धसे शब्द-स्वरूप गुण विद्यमान हो वह आकाश एक है, व्यापक है और नित्य है ।

कालस्य किं लक्षणं, कति च भेदाः ?

[3]अतीतादिव्यवहारहेतुः कालः । स चैको विभुर्नित्यश्च ।

अतीतेति । अतीत इत्यादिर्यो व्यवहारोऽतीतो भविष्यन्-वर्तमान इत्याद्यात्मकस्तस्यासाधारणहेतुः काल इत्यर्थः । नन्विदं लक्षणमाकाशेऽतिव्याप्तं व्यवहारस्य शब्दात्मकत्वा-दिति चेत् । न, अत्र हेतुपदेन निमित्तहेतोर्विवक्षितत्वात् । नचैवं

---

१. समवायसम्बन्धेन शब्दवत्त्वमाकाशस्य लक्षणम् । २. सर्व-क्रियावद्द्रव्यसंयोगित्वं विभुत्वम् । ३. अतीतानागतवर्तमानव्यव-हारासाधारण कारणत्वं कालस्य लक्षणम् ।

कण्ठताल्वाद्यभिघातेऽतिव्याप्तिरिति वाच्यम्। विभुत्वस्यापि निवेशात्।

अतीतादि ( भूत, भविष्य, वर्तमान ) के व्यवहारका कारण जो द्रव्य है वही 'काल' कहलाता है, वह काल भी एक है, सर्वव्यापक है और नित्य है।

दिशः किं लक्षणं, कतिविधा च सा?

[1]प्राच्यादिव्यवहारहेतुर्दिक्। सा चैका। नित्या विभ्वी च।

प्राचीति। इयं प्राचीयमवाचीयं प्रतीचीयमुदीचीत्यादि-व्यवहारासाधारणं कारणं दिगित्यर्थः। हेतुर्दिगित्युच्यमाने परमाण्वादावतिव्याप्तिः स्यात्तद्वारणाय प्राच्यादिव्यवहारहेतु-रिति आकाशादिवारणायासाधारणेति।

'दिशा' वह है जो—पूर्व, पश्चिम, दक्षिण और उत्तर के व्यवहार का कारण ( द्रव्य ) हो। वह दिशा भी—एक है, नित्य है और सर्वव्यापक है।

---

१. प्राचीप्रतीच्युदीच्यवाच्यादिव्यवहारासाधारणकारणत्वं दिक्-सामान्यलक्षणम्।

आत्मनः किं लक्षणं, कतिविधश्च सः ?

ज्ञानाधिकरणमात्मा[1] । स द्विविधः—जीवात्मा परमात्मा चेति । तत्रेश्वरः सर्वज्ञः[2] । परमात्मा[3] एक एव, जीवस्तु[4] प्रतिशरीरं भिन्नो विभुर्नित्यश्च ।

ज्ञानाधिकरणेति । भूतलादिवारणाय ज्ञानेति । कालादिवारणाय समवायेनेत्यपि देयम् । ईश्वर इति । समवायसम्बन्धेन नित्यज्ञानवानीश्वरः । जीव इति । सुखादि-समवायिकारणं जीव इत्यर्थः ।

जिस द्रव्यमें समवायसम्बन्धसे ज्ञान रहता हो वही 'आत्मा' है ( ज्ञान का अधिकरण आत्मा है, क्योंकि आत्मा

---

१. समवायसम्बन्धेन ज्ञानाश्रयत्वम् आत्मसामान्यलक्षणम् । समवायसम्बन्धावच्छिन्नज्ञाननिष्ठाऽऽधेयतानिरूपिताधिकरणतावत्त्वं वा । २. सर्वज्ञत्वञ्च-यत्किञ्चिद्धर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यताव-च्छिन्नविषयितात्वव्यापकज्ञानाश्रयत्वम् । व्यापकता च स्वीयविषयिता-निरूपकतावच्छेदकधर्मावच्छिन्ननिरूपकतानिरूपितनिरूप्यतावत्त्वसम्ब-न्धेन । ३. समवायसम्बन्धेन नित्यज्ञानाधिकरणत्वं परमात्मत्वम् । ४. अनेकत्वे सति विभुत्वे सति नित्यत्वे सति समवायेन ज्ञाना-धिकरणत्वं जीवात्मनो लक्षणम् ।

में ज्ञान समवायसम्बन्ध से रहता है )। वह आत्मा दो तरह की है—जीवात्मा और परमात्मा। परमात्मा—ईश्वर है, सर्वज्ञ है और एक ही है। जीवात्मा प्रत्येक शरीरमें भिन्न-भिन्न है, व्यापक है और नित्य है।

मनसः किं लक्षणं, कतिविधं च तत्?

[1]सुखाद्युपलब्धिसाधनमिन्द्रियं मनः। तच्च प्रत्यात्मनियतत्वादनन्तं परमाणुरूपं नित्यं च।

सुखेति। आत्ममनःसंयोगादिवारणायेन्द्रियमिति। चक्षुरादिवारणाय सुखेति।

'मन' वह कहलाता है, जिस ( इन्द्रिय ) से सभी प्रकार के सुख-दुःखकी उपलब्धि ( ज्ञान ) होती हो। मन प्रत्येक जीवात्मा के साथ भिन्न-भिन्न है। इसलिये वह अनन्त है, परमाणुरूप है और नित्य है।

## [ ३ ] गुणलक्षणप्रकरणम्।

रूपस्य किं लक्षणं, कतिविधं च तत्?

---

१. सुखदुःखादिसाक्षात्कारकारणत्वे सति इन्द्रियत्वम्, स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम्।

चक्षुर्मात्रग्राह्यो गुणो रूपम्। तच्च शुक्लनीलपीत-रक्तहरितकपिशचित्रभेदात् सप्तविधम्। पृथिवीजल-तेजोवृत्ति। तत्र पृथिव्यां सप्तविधम्। अभास्वरशुक्लं जले भास्वरशुक्लं तेजसि।

चक्षुरिति। रूपत्वादिवारणाय गुणपदम्। रसादिवारणाय चक्षुर्ग्राह्य इति। संख्यादिवारणाय मात्रपदम्। यद्यपि प्रभाभित्तिसंयोगवारणाय गुणपदेन विशेषगुणस्य विवक्षणीयतया तत एव संख्यादिवारणं सम्भवतीति मात्रपदं व्यर्थम्। तथापि सांसिद्धिकद्रवत्ववारणाय तदावश्यकम्। वस्तुतस्तु परमाणुरूपेऽव्याप्तिवारणाय चक्षुर्मात्रग्राह्यजातिमत्त्वस्य विवक्षणीयता विशेषपदं न देयम्। द्व्यणुकादिवारणाय गुणपदं तु देयम्। सप्तेति। रूपमित्यनुषज्यते।

'रूप' वही कहलाता है, जिस (गुण) का प्रत्यक्ष आँखोंसे होता हो। वह रूप सात प्रकारका है—शुक्ल, नील, पीत, रक्त, हरित, कपिश और चित्र—इस भेद से।

---

१. चक्षुर्भिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्य-प्रत्यक्षविषयत्वविशिष्टविशेषगुणत्वं रूपसामान्यलक्षणम्। चक्षुर्ग्राह्यजातिमद्गुणत्वं वा।

वह रूप पृथिवी, जल और तेजमें रहता है। पृथिवीमें शुक्ल आदि सातों प्रकार का रूप रहता है। जलमें अभास्वर शुक्लरूप है और तेजमें भास्वर शुक्लरूप है।

( बिना चमकवाला श्वेतरूप 'अभास्वरशुक्ल' रूप और चमकीला तथा प्रकाशक सफेद रूप 'भास्वरशुक्ल' रूप कहलाता है। )

रसस्य किं लक्षणं, कतिविधश्च सः ?

[1]रसनाग्राह्यो गुणो रसः। स च मधुराम्ललवणकटुकषायतिक्तभेदात् षड्विधः। पृथिवी जलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव।

रसनेति। रसत्वादिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय रसनेति। तत्रेति। पृथिवीजलयोरित्यर्थः। षड्विध इति। अत्र रस इत्यनुवर्तते।

'रस' वह कहलाता है, जिस ( गुण ) की रसनेन्द्रिय ( जीभ ) से प्रत्यक्ष हो। वह रस छः प्रकारका है—मधुर, अम्ल, लवण, कटु, कषाय और तिक्त—इस भेदसे। वह रस

१. रसनेन्द्रियजन्यप्रत्यक्षविषयत्वविशिष्टगुणत्वं रसस्य लक्षणम्।

पृथिवी और जल में रहता है। तत्र ( पृथिवी और जल के मध्य में ) पृथिवी में अम्लादि छः प्रकारका रस है और जल में केवल मधुर रस ही है।

[ जल में अम्लादिरस की प्रतीति उपाधिभेदसे हुआ करती है ]

गन्धस्य किं लक्षणं, तद्भेदश्च कः ?

[1]घ्राणग्राह्यो गुणो गन्धः। स द्विविधः—सुरभिरसुरभिश्च। पृथिवीमात्रवृत्तिः।

घ्राणग्राह्य इति। गन्धत्वादावतिव्याप्तिवारणाय गुण इति। रूपादावतिव्याप्तिवारणाय घ्राणग्राह्य इति। पृथिवीति। पृथिवी-सम्बन्धसत्त्वे गन्धप्रतीतिसत्त्वं पृथिवीसम्बन्धाभावे गन्धप्रतीत्यभाव इत्यन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव जले प्रतीतिर्बोध्या। एवं वायावपि। ननु देशान्तरस्थकस्तूरीकुसुमसम्बद्धपवनस्यैतद्देशे असत्त्वात्कुसुमादिसम्बन्धाभावाद्गन्धप्रतीत्यनुपपत्तिः। नच वाय्वानीतत्र्यणुकादिसम्बन्धोऽस्त्येवेति वाच्यम्। कस्तूर्यां न्यूनतापत्तेः, कुसुमस्य च सच्छिद्रत्वापत्तेरिति चेन्न।

१. घ्राणेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं गन्धसामान्यलक्षणम्।

भोक्त्रदृष्टविशेषेण पूर्ववत्त्र्यणुकान्तराद्युत्पत्तेः कर्पूरादौ तु तदभावान्न तथात्वमिति ।

'गन्ध' वह कहलाती है, जिस ( गुण ) का घ्राणेन्द्रिय ( नाक ) से प्रत्यक्ष हो । सुगन्ध और दुर्गन्धके भेदसे वह गन्ध दो तरहकी है और पृथिवीमें ही रहती है । ( जल और वायुमें भी पृथिवीकी गन्धकी ही प्रतीति होती है । )

स्पर्शस्य किं लक्षणं, के च भेदाः ?

[1]त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । स च त्रिविधः—शीतोष्णानुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतो जले । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ।

स्पर्शत्वादावतिव्याप्तिवारणाय गुण इति । रूपादावतिव्याप्तिवारणाय त्वगिन्द्रियेति । सङ्ख्यादिवारणाय मात्रपदम् । तत्रेति । पृथिव्यादिचतुष्टये । शीत इति शीतस्पर्श उष्ण इति उष्णस्पर्शः ॥

---

१. त्वगिन्द्रियभिन्नेन्द्रियजन्यप्रत्यक्षाविषयत्वे सति त्वगिन्द्रियजन्यप्रत्यक्षविषयत्वविशिष्टगुणत्वं स्पर्शस्य लक्षणम् ।

'स्पर्श' वही कहलाता है, जिस गुणका केवल त्वगिन्द्रिय ( त्वचा ) से प्रत्यक्ष होता हो। वह स्पर्श तीन प्रकारका है—शीत ( ठण्डा ), उष्ण ( गर्म ) और अनुष्णाशीत ( न अधिक ठण्डा न अधिक गर्म )। पृथिवी, जल, तेज और वायु इन चारोंमें स्पर्श रहता है। जलमें शीतस्पर्श, तेजमें उष्णस्पर्श, पृथिवी और वायुमें अनुष्णाशीतस्पर्श है।

रूपादिचतुष्टयं कुत्र, पाकजमपाकजं वा कुत्र ?

रूपादिचतुष्टयं पृथिव्यां पाकजमनित्यं च अन्यत्रापाकजं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्।

पृथिवीमें रूप, रस, गन्ध और स्पर्श—ये चार प्रकारके गुण पाकज ( तेजके संयोगसे उत्पन्न होने वाले ) हैं तथा अनित्य हैं, और अन्यत्र ( जल, तेज, वायुमें ) अर्थात् जलमें रहनेवाले रूप-रस-स्पर्श, तेजमें रहनेवाले रूप-स्पर्श और वायुमें रहनेवाला स्पर्श अपाकज है तथा नित्य और अनित्य दोनों हैं। नित्यगत ( जल आदिके परमाणुमें

१. विजातीयतेजस्संयोगजत्वम् पाकजत्वम्।

रहनेवाले ) रूप, रस, स्पर्श नित्य हैं और अनित्यगत ( घट-पटादि कार्यमें रहनेवाले ) अनित्य हैं।

संख्यायाः किं लक्षणम्, कुत्र च सा वर्त्तते ?

[1]एकत्वादिव्यवहारहेतुः संख्या। सा नवद्रव्यवृत्तिः। एकत्वादिपरार्धपर्यन्ता। एकत्वं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्। द्वित्वादिकं तु सर्वत्राऽनित्यमेव।

एकत्वादिति। एकत्वमित्यादियों व्यवहारः एको द्वावित्याद्यात्मकस्तस्य हेतुः सङ्ख्या इत्यर्थः। घटादिवारणाय एकत्वादीति। कालादिवारणासाधारणेत्यपि देयम्। ननु सङ्ख्याया अवधिरस्ति न वेत्यत आह—एकत्वादीति। तथाच—एकं दश शतं चैव सहस्रमयुतं तथा। लक्षं च नियुतं चैव कोटिरर्बुदमेव च॥ वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः। अन्त्यं मध्यं परार्धं च दशवृद्धया यथाक्रमम्॥

१. एकत्वद्वित्वबहुत्वादिव्यवहारासाधारणकारणत्वं संख्यासामान्यलक्षणम्।

इति महदुक्तेः परार्धपर्यन्तैव संख्या इति भावः ।

'संख्या' वही कहलाती है, जो एक, दो, तीन, चार, आदि व्यवहारका कारण हो। वह संख्या पृथिवी आदि नव द्रव्योंमें रहती है, और एकसे परार्ध*पर्यन्त होती है। नित्यगत ( पृथिवी, जल, तेज और वायुके परमाणु तथा आकाश, काल, दिशा, आत्मा और मन इन नित्य पदार्थोंमें रहनेवाला ) एकत्व नित्य है, और अनित्यगत ( घट–पट आदि अनित्य पदार्थोंमें रहनेवाला ) एकत्व अनित्य है। परन्तु द्वित्वादि संख्या तो सर्वत्र अनित्य ही है।

परिमाणस्य किं लक्षणं, के च तस्य भेदाः?

[1]मानव्यवहारासाधारणकारणं परिमाणम्। नव-द्रव्यवृत्ति। तच्चतुर्विधम्—अणु महद्दीर्घं ह्रस्वं चेति।

---

*तथा च—'एकं दश शतं चैव सहस्रमयुतं तथा। लक्षं च नियुतं चैव कोटिरर्बुदमेव च॥ वृन्दं खर्वो निखर्वश्च शंखः पद्मश्च सागरः॥ अन्त्यं मध्यं परार्धं च दशवृद्ध्या यथाक्रमम्'॥

१. मानव्यवहारासाधारणकारणत्वं परिमाणसामान्यलक्षणम्।

मानेति । मानं परिमितिस्तस्या यो व्यवहार:–इदं महदिदमणु–इत्याद्यात्मक: तस्य कारणं परिभाणमित्यर्थ: । दण्डादिवारणाय मानेति । कालादिवारणायासाधारणेति । शब्दत्ववारणाय कारणमिति । नवद्रव्येति । चतुर्विधमपि परमध्यभेदेन द्विविधम् । तत्र परमाणुह्रस्वत्वे परमाणुमनसो: । मध्यमाणुह्रस्वत्वे द्वयणुके । परममहत्त्वदीर्घत्वे गगनादौ । मध्यममहत्त्वदीर्घत्वे घटादौ । एतन्मौक्तिकमण्विति व्यवहारस्यापकृष्टमहत्त्वाश्रयत्वाद् गौणत्वं बोध्यम् । एवमेव केतनाद्वयजनं ह्रस्वमित्यत्रापि निकृष्टदीर्घत्वाद् गौणत्वम् ॥

'परिमाण' वह है, जो—एक हाथ, दो हाथ, एक सेर, दो सेर इत्यादि नापने और तौलनेके व्यवहारका प्रधान कारण हो । वह परिमाण नव द्रव्योंमें रहता है और चार प्रकारका है—अणु ( अत्यन्त छोटा ) महत् ( बड़ा ) दीर्घ ( लम्बा ) और ह्रस्व ( नाटा ) इस भेदसे ।

पृथक्त्वस्य किं लक्षणम् ?

[1]पृथग्व्यवहारासाधारणकारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति ।

---

१. पृथग्व्यवहारासाधारणत्वं पृथक्त्वलक्षणम् ।

पृथगिति । अयमस्मात्पृथगिति यो व्यवहारस्तस्य कारणं पृथक्त्वमित्यर्थः । दण्डादिवारणाय पृथगित्यादि । कालादिवारणायासाधारणेति । पृथग्व्यवहारत्ववारणाय कारणमिति ॥

यह घट पटसे भिन्न है इत्यादि व्यवहारका प्रधान कारण 'पृथक्त्व' है । पृथक्त्व भी उक्त नव द्रव्योंमें रहता है ।

संयोगस्य किं लक्षणम् ?

[1]संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः ।

संयुक्तेति । इमौ संयुक्ताविति यो व्यवहारस्तस्य हेतुः संयोग इत्यर्थः । दण्डादिवारणाय संयुक्तव्यवहारेति । कालादिवारणायासाधारणेत्यपि देयम् । संयुक्तव्यवहारत्वेऽतिप्रसक्तिवारणाय हेतुरिति । उपदर्शितलक्षणचतुष्टयेऽसाधारणपदं देयम् । क्वचित्पुस्तके परिमाणपृथक्त्वलक्षणे ईश्वरेच्छादिवारणायासाधारणेति दृश्यते, तत्त्वाधुनिकैर्न्यस्तमिति बोध्यम् ॥

ये दोनों पदार्थ सम्मिलित हैं इत्यादि व्यवहारका असाधारण कारण 'संयोग' है । यह संयोग भी उक्त नव द्रव्योंमें रहता है ।

---

१. संयुक्तव्यवहारासाधारणकारणत्वं संयोगस्य लक्षणम् ।

विभागस्य किं लक्षणम् ?

[1]संयोगनाशको गुणो विभागः । सर्वद्रव्यवृत्तिः ।

संयोगेति । संयोगनाशजनक इत्यर्थः । कालेऽतिप्रसक्तिवारणाय गुणपदम् । ईश्वरेच्छादिवारणायासाधारणेत्यपि बोध्यम् । ननु असाधारणपदोपादाने गुणपदस्य वैयर्थ्यं स्यादिति चेत् । न, क्रियायामतिप्रसक्तिवारणाय तस्याप्यावश्यकत्वात् ॥

[ परस्पर मिले हुए पदार्थोंका विभाग (अलग-अलग) होनेसे संयोग नष्ट हो जाता है, इसलिये ] संयोगका नाश करनेवाला गुण विभाग है । यह विभाग भी उक्त सभी नव द्रव्योंमें रहता है ।

परत्वापरत्वयोः किं लक्षणं, के च भेदाः ?

[2]पराऽपर[3]व्यवहाराऽसाधारणकारणे परत्वापरत्वे ।

---

१. संयोगनाशकत्वविशिष्टगुणत्वं विभागस्य लक्षणम् । २. परव्यवहारासाधारणकारणत्वम्परत्वम् । ३. अपरव्यवहारासाधारणकारणत्वमपरत्वम् ।

पृथिव्यादिचतुष्टयमनोवृत्तिनी। ते च द्विविधे—दिक्कृते, कालकृते चेति। दूरस्थे दिक्कृतं परत्वम्, समीपस्थे दिक्कृतमपरत्वम्। ज्येष्ठे कालकृतं परत्वं, कनिष्ठे कालकृतमपरत्वम्।

परेति। परव्यवहारासाधारणं कारणं परत्वम्। अपरव्यवहारासाधारणं कारणमपरत्वमित्यर्थः। दण्डादिवारणाय परव्यवहारेति। कालादिवारणायासाधारणेति। परव्यवहारत्ववारणाय कारणेति। एवमेव द्वितीयेऽपि बोध्यम्॥

यह पर ( दूर ) है और यह अपर ( समीप ) है। इस व्यवहारका असाधारण कारण 'परत्व' और 'अपरत्व' है। ये ( परत्व-अपरत्व ) पृथिवी, जल, तेज, वायु और मनमें रहते हैं। ये भी दो तरहके हैं—दिक्कृत परत्व और दिक्कृत अपरत्व। कालकृत परत्व और कालकृत अपरत्व। दूरस्थ घट–पटादि पदार्थों में दिक्कृत परत्व है और समीपस्थ पदार्थोंमें दिक्कृत अपरत्व है। ज्येष्ठ ( बड़े ) में कालकृत परत्व है और कनिष्ठ ( छोटे ) में कालकृत अपरत्व है

[1]आद्यपतनाऽसमवायिकारणं गुरुत्वम्। पृथिवी-जलवृत्ति।

आद्येति। दण्डादिवारणायासमवायीति। रूपादिवारणाय पतनेति। वेगेऽतिव्याप्तिवारणायाद्येति॥

प्रथम पतनका असमवायिकारणीभूत जो गुण, वह गुरुत्व ( भारीपन ) है। वह पृथिवी और जलमें रहता है।

द्रवत्वस्य किं लक्षणम्, के च भेदाः ?

[2]आद्यस्यन्दनाऽसमवायिकारणं द्रवत्वम्। पृथिव्यप्तेजोवृत्ति। तद् द्विविधं सांसिद्धिकं, नैमित्तिकं च। सांसिद्धिकं जले। नैमित्तिकं पृथिवीतेजसोः। पृथिव्यां घृतादावग्निसंयोगजं द्रवत्वं, तेजसि सुवर्णादौ।

आद्यस्यन्दनेति। दण्डादिवारणायासमवायीति। रसादिवारणाय स्यन्दनेति॥

प्रथम स्यन्दन ( बहना और टपकना ) का असमवायिकारण गुण द्रवत्व है। वह पृथिवी, जल और तेजमें

१. आद्यपतनासमवायिकारणत्वं गुरुत्वस्य लक्षणम्।

२. आद्यस्यन्दनासमवायिकारणत्वं द्रवत्वलक्षणम्।

रहता है। द्रवत्व भी दो तरहका होता है—सांसिद्धिक और नैमित्तिक। ( स्वभावसे होनेवाला द्रवत्व सांसिद्धिक द्रवत्व है और अग्नि आदि तेजोंसे होनेवाला द्रवत्व नैमित्तिक द्रवत्व है। ) सांसिद्धिक द्रवत्व जलमें है और नैमित्तिक द्रवत्व—पृथिवी तथा तेज दोनों में है। घृत, मोम, सुवर्ण आदि पदार्थों में नैमित्तिक द्रवत्व है, क्योंकि वह अग्नि आदि तैजस पदार्थके संयोगसे उत्पन्न होता है और जलमें विना कारणका स्वाभाविक ही द्रवत्व है।

स्नेहस्य किं लक्षणम्, कुत्र च सः ?

[1]चूर्णादिपिण्डीभावहेतुर्गुणः स्नेहः। जलमात्रवृत्तिः।

चूर्णादीति। चूर्णं पिष्टं तदेवादिर्यस्य मृत्तिकादेः स चूर्णादिस्तस्य पिण्डीभावः संयोगविशेषस्तस्य हेतुर्निमित्तकारणं स्नेह इत्यर्थः। कालादावतिव्याप्तिवारणाय पिण्डीभावेति। चूर्णपदं स्पष्टार्थम्॥

जिसको पीसे हुए यव आदि चूर्णमें मिलाकर गोली बनाई जाय उसी गुणका नाम 'स्नेह' ( चिकनाहट ) है। स्नेह केवल जलमें ही रहता है ?

१. चूर्णादिपिण्डीभावहेतुत्वे सति गुणत्वं स्नेहस्य लक्षणम्।

शब्दस्य किं लक्षणम्, कुत्र च सः ?

[1]श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । स द्विविधः–ध्वन्यात्मको, वर्णात्मकश्च । तत्र ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ।

श्रोत्रेति । शब्दत्वेऽतिव्याप्तिवारणाय गुण इति । रूपादिवारणाय श्रोत्रग्राह्य इति ।

वस्तुतस्तु श्रोत्रोत्पन्नशब्दस्यैव श्रोत्रग्राह्यत्वेन तद्भिन्नेऽव्याप्तिवारणाय श्रोत्रग्राह्यजातिमत्त्वे तात्पर्याद् गुणपदमनुपादेयमेव ॥

'शब्द' वही है—जिस गुणका श्रोत्रेन्द्रिय ( कान ) से प्रत्यक्ष होता हो । वह शब्द केवल आकाशमें ही रहता है । शब्द दो तरह का है—ध्वन्यात्मक और वर्णात्मक । भेरी ( नगाडा ) आदि बाजा बजाने से जो शब्द उत्पन्न होता है, वह ध्वन्यात्मक शब्द कहा जाता है और कण्ठ से संस्कृत भाषा आदि रूप जो शब्द निकलता है, वह वर्णात्मक शब्द कहलाता है ।

---

१ श्रोत्रेन्द्रिय[illegible]

बुद्धेः किं लक्षणं कतिविधा च सा ?

[1]सर्वव्यवहारहेतुर्गुणो बुद्धिर्ज्ञानम् । सा द्विविधा—स्मृतिरनुभवश्च ।

बुद्धिलक्षणमाह—सर्वेति । सर्वे ये व्यवहारा आहार-विहारादयस्तेषां हेतुर्बुद्धिरित्यर्थः । दण्डादिवारणाय सर्वव्य-वहारेति । कालादिवारणाय साधारणेत्यपि देयम् ।

सभी तरह के व्यवहार ( शब्दप्रयोग ) में जो गुण कारण होता हो वही 'बुद्धि' अथवा 'ज्ञान' कहा जाता है । ( बुद्धिका ही दूसरा नाम ज्ञान है । बुद्धि और ज्ञान में कोई भेद नहीं है । इसलिये मूलमें, 'बुद्धिर्ज्ञानम्' कहा है ) । वह बुद्धि (ज्ञान) दो प्रकारकी है—स्मृति ( स्मरण) और अनुभव इस भेदसे ।

स्मृतेः किं लक्षणम् ?

[2]संस्कारमात्रजन्यं ज्ञानं स्मृतिः ।

संस्कारेति । संस्कारध्वंसेऽतिव्याप्तिवारणाय ज्ञानमिति । अनुभवेऽतिव्याप्तिवारणाय संस्कारजन्यमिति । तथापि

१. निखिलव्यवहारहेतुत्वे सति गुणत्वं बुद्धेर्लक्षणम् । २. बहि-रिन्द्रियाजन्यत्वविशिष्टसंस्कारजन्यत्वविशिष्टज्ञानत्वं स्मृतिलक्षणम् ।

प्रत्यभिज्ञायामतिव्याप्तिवारणाय संस्कारमात्रजन्यत्वं विवक्षणीयम् । क्वचित्तथैव पाठः । न चैवं सत्यसम्भवः—तस्य संस्कारजन्यत्वे सतीन्द्रियार्थसन्निकर्षाजन्यार्थकत्वात् ॥

'स्मृति' उस ज्ञानका नाम है, जो केवल संस्कारसे ही उत्पन्न होता हो ।

अनुभवस्य किं लक्षणम् के च भेदाः ?

[1]तद्भिन्नं ज्ञानमनुभवः । स द्विविधः-यथार्थोऽयथार्थश्च ।

तदिति । स्मृतित्वावच्छिन्नभिन्नमित्यर्थः ? तेन यत्किञ्चित्स्मृतिभिन्नत्वस्य स्मृतौ सत्त्वेऽपि न क्षतिः । घटादावतिव्याप्तिवारणाय ज्ञानमिति । स्मृतिवारणाय तद्भिन्नमिति ।

स्मृति से भिन्न जो ज्ञान है उसीका नाम 'अनुभव' है । अनुभव भी दो तरह का है—यथार्थ-अनुभव (सच्चा ज्ञान) और अयथार्थ अनुभव ( मिथ्या ज्ञान ) ।

यथार्थानुभवस्य किं लक्षणम् ?

[2]तद्वति तत्प्रकारकोऽनुभवो यथार्थः ( यथा रजते इदं रजतमिति ज्ञानम् ) सैव प्रमेत्युच्यते ।

---

१. स्मृतिभिन्नत्वविशिष्टज्ञानत्वमनुभवलक्षणम् । २. तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं यथार्थानुभवलक्षणम् ।

तद्वतीति । तद्वति तत्प्रकारो यस्य स तथेत्यर्थः । तद्वद्विशेष्यकतत्प्रकारक इति यावत् । स्मृतिवारणायानुभव इति । अयथार्थानुभववारणाय तद्वतीति । निर्विकल्पकेऽतिव्याप्तिवारणाय तत्प्रकारक इति ॥

जो वस्तु वास्तवमें जिस तरहकी हो उसको उसी तरहकी समझना, यही यथार्थ अनुभव कहलाता है। जैसे रजत ( चाँदी ) में रजतत्वविशेषणक और रजतविशेष्यक ज्ञान । अर्थात् चांदीको चांदी और सोनेको सोना समझना । इसी ( यथार्थानुभव ) का नाम प्रमा भी है ।

अयथार्थानुभवस्य किं लक्षणम् ?

[1]तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः ( यथा 'शुक्तौ इदं रजत' मिति ज्ञानम् ) सैवाऽप्रमेत्युच्यते ।

तदभावेति । तदभाववद्विशेष्यकतत्प्रकारकोऽनुभवोऽयथार्थानुभव इत्यर्थः । यथा 'शुक्तौ इदं रजतम्' इति ज्ञानम् । स्मृतिवारणायानुभव इति । यथार्थानुभवेऽतिव्याप्तिनिरसनाय तदभाववतीति । निर्विकल्पकवारणाय तत्प्रकारक इति ॥

१. तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सति अनुभवत्वम् अयथार्थानुभवलक्षणम् ।

'अयथार्थ-अनुभव' ( मिथ्याज्ञान ) उसे कहते हैं जो वस्तु वास्तवमें उस तरहकी न हो पर उसे वैसी ही समझना। जैसे—सीपको चांदी और रस्सीको सर्प समझना। इसी ( अयथार्थानुभव ) का नाम अप्रमा है।

यथार्थानुभवभेदाः के ?

यथार्थानुभवश्चतुर्विधः-प्रत्यक्षानुमित्युपमितिशाब्द-भेदात्।

यथार्थेति। यथार्थानुभवः प्रत्यक्षमेवेति चार्वाकाः। अनुमितिरपीति काणादबौद्धौ। उपमितिरपीति नैयायिकैक-देशिनः। शाब्दमपीति नैयायिकाः। अर्थापत्तिरपीति प्राभा-कराः। आनुपलब्धिकोऽपीति भाट्टवेदान्तिनौ। साम्भविकैति-ह्यकावपीति पौराणिकाः। चैष्टिकोऽपीति तान्त्रिकाः। एतेषां मतेऽस्वरसं सम्भाव्य तस्य चातुर्विध्यं दर्शितम्॥

'यथार्थ-अनुभव' चार तरह के होते हैं—प्रत्यक्ष, अनुमिति, उपमिति और शाब्द इस भेद से।

[ प्रत्यक्षस्वरूप यथार्थानुभव जैसे—'अयं घटः' ( यह घड़ा है )। अनुमितिस्वरूप यथार्थानुभव जैसे—'पर्वतो वह्निमान्' ( पर्वतमें आग है )। उपमितिस्वरूप यथार्थानु-

भव जैसे—'गवयो गवयपदवाच्यः' ( गोसदृश जो वनका पशु, वह गवय इस पदका अर्थ है )। शाब्दबोधस्वरूप यथार्थानुभव जैसे—'अहं गच्छामि' इति वाक्यजन्यं ज्ञानं 'गमनानुकूलकृतिमानहम्' ( मैं जाता हूँ ) ]।

तत्करणं कतिविधम् ?

तत्करणमपि चतुर्विधं-प्रत्यक्षानुमानोपमानशाब्द-भेदात् ।

तदिति । यथार्थानुभवात्मकप्रमायाः कारणमित्यर्थः ॥

यथार्थ अनुभवके करण (असाधारण कारण) भी चार प्रकार के होते हैं—प्रत्यक्ष, अनुमान, उपमान और शब्द इस भेद से । प्रत्यक्षस्वरूप करण—इन्द्रियां हैं । अनुमान-स्वरूप करण—लिंगपरामर्श है । उपमानस्वरूप करण—सादृश्यज्ञान है । शब्दस्वरूपकरण-सत्यवादियोंका कथन है ।

करणस्य किं लक्षणम् ?

[१]असाधारणं कारणं करणम् ।

असाधारणमिति । कालादिवारणायासाधारणमिति ।

१. व्यापारवत्त्वे सति असाधारणत्वं करणलक्षणम् । कार्यत्वाति-रिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशालित्वम् असाधारणत्वम् । कार्यत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वं साधारणकारणत्वम् ।

व्यापारेऽतिव्याप्तिवारणाय व्यापारवदित्यपि देयम् । व्यापारश्च—द्रव्यान्यत्वे सति तज्जन्यत्वे सति तज्जन्यजनकः । ईश्वरेच्छादिवारणाय तज्जन्यत्वे सतीति । कुलालजन्यत्वे सति कुलालजन्यघटजनकत्वं कुलालपुत्रस्याप्यस्त्यतस्तत्रातिव्याप्तिवारणाय प्रथमं सत्यन्तम् । दण्डरूपादिवारणाय तज्जन्यजनक इति ॥

'करण' वह कहलाता है, जो कार्य के प्रति असाधारण ( विशेष ) कारण हो ।

[ साधारण कारण वह कहलाता है, जो सभी कार्यों की उत्पत्तिका कारण हो । जैसे—ईश्वर, काल आदि । ]

कारणस्य किं लक्षणम् ?

[1]कार्यनियतपूर्ववृत्ति कारणम् ।

कार्येति । कार्यान्नियताऽवश्यम्भाविनी पूर्ववृत्तिः पूर्वक्षणवृत्तिर्यस्य तत्तथेत्यर्थः । अनियतरासभादिवारणाय नियतेति । कार्यवारणाय पूर्वेति । दण्डत्वादिवारणायानन्यथासिद्धत्वविशे-

---

१. कार्याव्यवहितप्राक्क्षणावच्छेदेन नियतपूर्ववियमानत्वे सति अन्यथासिद्धभिन्नत्वे सति हेतुत्वं कारणस्य लक्षणम् ।

षण्यस्यावश्यकत्वेन तत एव रासभादिवारणसम्भवे नियतपदमनर्थकमेव । एवं चानन्यथासिद्धकार्यपूर्ववृत्ति कारणमिति फलितम् । अनन्यथासिद्धत्वमन्यथासिद्धिशून्यत्वम् । अन्यथासिद्धिश्चावश्यक्लृप्तनियतपूर्ववर्तिनैव कार्यसम्भवे तत्सहभूतत्वम् । यथाऽवश्यक्लृप्तनियतपूर्ववर्त्तिभिर्दण्डादिभिरेव घटरूपकार्यसम्भवे तत्सहभूतत्वं दंडत्वादौ तदन्यथासिद्धम् ॥

'कारण' वही कहलाता है, जो घट आदि कार्यों की उत्पत्तिके पहले अवश्य रहे । [ जैसे—घट के प्रति दण्ड, चक्र, कुलाल आदि । ]

कार्यस्य किं लक्षणम् ?

[1]कार्यं प्रागभावप्रतियोगि ।

प्रागभावेति । कालादिवारणाय प्रागिति । असम्भववारणाय प्रतियोगीति ।

'कार्य' वह कहलाता है जो पदार्थ प्रागभाव का प्रतियोगी हो, अर्थात् जिसकी उत्पत्ति होने की सम्भावना हो जैसे—घट, पट आदि ।

---

१. प्रागभावप्रतियोगित्वं कार्यसामान्यलक्षणम् ।

[ घटादि-कार्योत्पत्ति के पहले कपालादि को देखकर यहाँ घट होगा ऐसा ज्ञान होता है। इस ज्ञान का विषय जो अभाव है वही 'प्रागभाव' कहलाता है ]

कारणं कतिविधम् ?

कारणं त्रिविधं—समवाय्यसमवायिनिमित्तभेदात्।

'कारण' तीन प्रकारके हैं—समवायिकारण, असमवायिकारण और निमित्तकारण इस भेद से।

समवायिकारणस्य किं लक्षणम् ?

[1]यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः।

यदिति। यस्मिन्समवायसम्बन्धेन वर्तमानं कार्यमुत्पद्यते तदित्यर्थः। चक्रादिवारणाय समवेतमिति॥

जिस द्रव्यमें समवाय सम्बन्ध से कार्य उत्पन्न हो वह 'समवायिकारण' होता है। जैसे—वस्त्र का समवायिकारण सूत है और वस्त्र भी अपने श्वेत आदि रूप का समवायिकरण है। इसी तरह घटका समवायिकारण कपाल है ?

१. समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वम्।

असमवायिकारणस्य किं लक्षणम् ?

[१]कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतं सत् कारणमसमवायिकारणम्। यथा तन्तुसंयोगः पटस्य, तन्तुरूपं पटरूपस्य।

कार्येणेति। कार्येण कारणेन वा सहैकस्मिन्नर्थे समवेतत्वे सति आत्मविशेषगुणभिन्नत्वे सति यत् कारणं तदसमवायिकारणम्। तन्तुसंयोगादावव्याप्तिवारणाय कार्येणेति। तन्तुरूपादावव्याप्तिवारणाय कारणेनेति। आत्मविशेषगुणेऽतिव्याप्तिवारणायात्मविशेषगुणभिन्नत्वे सतीति। विशेषवारणाय कारणमिति।

'असमवायिकारण' वह कहलाता है, जो कारण कार्य या कारण के साथ का हो, जैसे—अनेक तागों का संयोग वस्त्र के प्रति असमवायिकारण है। कारण के साथ का जैसे—सूत का रूप वस्त्र के रूप के प्रति असमवायिकारण है।

---

१. समवायसम्बन्धावच्छिन्नकार्यतानिरूपिता या समवायस्वसमवायसमवेतत्वान्यतरसम्बन्धावच्छिन्ना कारणता तादृशकारणताश्रयत्वमसमवायिकारणत्वम्।

निमित्तकारणस्य किं लक्षणम् ?

[1]तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य ।

तदुभयभिन्नं कारणं निमित्तकारणमिति । समवायासमवायिकारणवारणाय तदुभयभिन्नमिति । विशेषादावतिव्याप्तिवारणाय कारणमिति ।

'निमित्तकारण' वह कहलाता है, जो समवायिकारण और असमवायिकारणसे भिन्न हो ? जैसे—तुरी, वेमा ( जुलाहेका ताना आदि औजार ) वस्त्रका निमित्तकारण है। एवं घटके प्रति दण्ड, चक्र, कुलाल आदि निमित्तकारण हैं ?

करणस्य निष्कृष्टलक्षणं किम् ?

तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।

तदेतदिति । यस्मात्कारणत्वघटकं कारणमुपदर्शितं तस्मादेतत्त्रिविधसाधकमध्ये यत्साधकतमं तदेव करणमिति भावः ॥ इति करणप्रपञ्चः ।

---

१. समवायिकारणभिन्नत्वे सत्यसमवायिकारणभिन्नत्वे सति हेतुत्वं निमित्तकारणत्वम् ।

समवायिकारण, असमवायिकारण और निमित्तकारणोंमें जो असाधारण हो वही 'करण' कहलाता है।

प्रत्यक्षप्रमाणलक्षणं किम् ?

[1]तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम् ।

तत्रेति । प्रमाणचतुष्टयमध्ये । दण्डादिवारणाय ज्ञानेति । अनुमानादिवारणाय प्रत्यक्षेति ।

प्रत्यक्ष ज्ञानका असाधारणकारण 'प्रत्यक्षप्रमाण' ( नेत्र आदि इन्द्रियाँ ) है।

प्रत्यक्षज्ञानलक्षणं किम् ?

इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्[2] ( ज्ञानाकरणकं ज्ञानं प्रत्यक्षम् )। तद् द्विविधम्—निर्विकल्पकं सविकल्पकं चेति।

इन्द्रियार्थेति । इन्द्रियं चक्षुरादिकमर्थो घटादिस्तयोः सन्निकर्षः संयोगादिस्तज्जन्यं ज्ञानं प्रत्यक्षमित्यर्थः । सन्निकर्षध्वंसवारणाय ज्ञानमिति । अनुमित्यादिवारणायेन्द्रियार्थसन्नि-

---

१. प्रत्यक्षज्ञानकरणत्वे सति प्रमाणत्वं प्रत्यक्षप्रमाणलक्षणम् ।

२. इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं प्रत्यक्षप्रमाणलक्षणम् । प्रत्यक्षज्ञानाकरणत्वे सति ज्ञानत्वम् वा ।

कर्षेति। ननु सोपनेत्रचक्षुषा कथं पदार्थग्रहणं? चक्षुषा उपनेत्र-निरुद्धत्वेन पदार्थेन सह सन्निकर्षाभावात्, कथं वा स्वच्छजाह्नवीसलिलावृतमत्स्यादेश्चक्षुषा ग्रहणमिति चेन्न। स्वच्छद्रव्यस्य तेजोनिरोधकत्वाभावेन तदन्तश्चक्षुःप्रवेशसम्भवात्। न चेश्वरप्रत्यक्षेऽव्याप्तिरिति वाच्यम्। अत्र जन्यप्रत्यक्षस्यैव लक्षितत्वात्।

प्रत्यक्ष वही कहलाता है, जो ज्ञान नेत्र आदि इन्द्रियों के और घट आदि विषयोंके सन्निकर्ष (सम्बन्ध) से होता हो।

[ जिस ज्ञान में ज्ञान करण न हो वह ज्ञान प्रत्यक्ष-ज्ञान ( प्रत्यक्षप्रमा ) है। ]

यह प्रत्यक्ष दो तरहका है—निर्विकल्पक और सविकल्पक।

निर्विकल्पकलक्षणं किम्?

तत्र निष्प्रकारकं ज्ञानं निर्विकल्पकम्[1]। यथा किञ्चिदिदमिति।

---

१. विशेषणविशेष्यसम्बन्धानवगाहित्वविशिष्टज्ञानत्वं निर्विकल्पकज्ञानलक्षणम्।

तत्र निष्प्रकारकमिति । सविकल्पकेऽतिव्याप्तिवारणाय निष्प्रकारकमिति । प्रकारवारणाय ज्ञानमिति ।

जिस ज्ञानमें विशेष्य, विशेषण और सम्बन्धका भान न हो अर्थात् 'घटघटत्वे' आदि स्थलोंमें कौन विशेष्य है कौन विशेषण है और विशेषण विशेष्य का कौन-सा सम्बन्ध है ऐसा ज्ञान नहीं होता, अतः वह 'निर्विकल्पक' ज्ञान कहलाता है ।

सविकल्पकलक्षणं किम् ?

[1]सप्रकारकं ज्ञानं सविकल्पकम् । यथा डित्थोऽयं ब्राह्मणोऽयं श्यामोऽयमिति ।

सप्रकारमिति । घटादिवारणाय ज्ञानमिति । निर्विकल्पकवारणाय सप्रकारकमिति ।

जिस ज्ञानमें विशेष्य-विशेषण और उसके सम्बन्धका-ज्ञान हो वह 'सविकल्पक' ज्ञान कहलाता है । यथा—यह डित्थ ( लकड़ीका हाथी ) है, यह ब्राह्मण है, यह श्याम है, इस तरह का ज्ञान 'सविकल्पक' है ।

---

१. विशेषणविशेष्यसम्बन्धावगाहित्वविशिष्टज्ञानत्वं सविकल्पकलक्षणम् ।

सन्निकर्षः कतिविधः कश्च सः ?

प्रत्यक्षज्ञानहेतुरिन्द्रियार्थसन्निकर्षः षड्विधः संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति ।

प्रत्यक्षेति । तच्च प्रत्यक्षं षड्विधं—घ्राणजरासनचाक्षुषश्रौत्रत्वाचमानसभेदात् । ननु प्रत्यक्षकारणभूतेन्द्रियनिष्ठप्रत्यक्षसमानाधिकरणघटकः सन्निकर्षः क इत्यपेक्षायां तं विभज्य दर्शयति—प्रत्यक्षेति । लौकिकप्रत्यक्षेत्यर्थः ।

विषय ( घट-पट आदि ) और चक्षु आदि इन्द्रियोंका जो सन्निकर्ष ( सम्बन्ध ) है, वही प्रत्यक्षज्ञानका ( प्रत्यक्ष-प्रमितिका ) हेतु ( कारण ) है ।

यह सन्निकर्ष ( सम्बन्ध ) छः प्रकार का है—१ संयोग २ संयुक्तसमवाय, ३ संयुक्तसमवेतसमवाय, ४ समवाय, ५ समवेतसमवाय और ६ विशेषण-विशेष्यभाव ।

घट ( द्रव्य ) प्रत्यक्षे कः सन्निकर्षः ?

चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः ।

संयोगमुदाहरति—चक्षुषेति । तथा च द्रव्यचाक्षुषत्वाचमानसेषु संयोग एव सन्निकर्ष इति भावः ।

नेत्रसे घट-पट आदिका जो प्रत्यक्षज्ञान होता है उसमें 'संयोग सन्निकर्ष' है।

घटरूपप्रत्यक्षे कः सन्निकर्षः ?

घटरूपप्रत्यक्षजनने संयुक्तसमवायः सन्निकर्षः, चक्षुःसंयुक्ते घटे रूपस्य समवायात्।

घटरूपेति। चक्षुषा इत्यनुषज्यते। तथा च द्रव्यसमवेतचाक्षुषत्वाचमानसरासनघ्राणजेषु संयुक्तसमवाय एव सन्निकर्ष इत्यर्थः॥

घट, पट और वस्त्र आदि के लाल, पीले काले आदि रङ्गों का नेत्रोंसे प्रत्यक्ष ज्ञान करनेमें 'संयुक्तसमवाय' सन्निकर्ष होता है, क्योंकि नेत्रसे संयुक्त घट-पट आदि पदार्थोंमें लाल, पीला आदि रङ्ग समवाय सम्बन्ध से रहता है।

रूपत्व-( गुणगतजाति ) प्रत्यक्षे कः सन्निकर्षः ?

रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः सन्निकर्षः समवायात्।

रूपत्वेति। रूपत्वात्मकं यत्सामान्यं तत्प्रत्यक्ष इत्यर्थः।

अत्रापि चक्षुषा इत्यनुपज्यते। तथा च द्रव्यसमवेतसमवेत-चाक्षुषरासनघ्राणजस्पार्शनमानसेषु संयुक्तसमवेतसमवाय एव सन्निकर्ष इति भावः। अथ द्रव्यतत्समवेतप्रत्यक्षेऽपि संयुक्त-समवेतसमवाय एव सन्निकर्षोऽस्त्विति चेत्, नैतत्—आत्म-नोऽप्यनध्यक्षत्वप्रसङ्गात्।

घट आदि के रूपमें रहनेवाली रूपत्व जातिका नेत्रोंसे जो प्रत्यक्ष होता है, उस प्रत्यक्षमें 'संयुक्त-समवेत-समवाय' सन्निकर्ष है। क्योंकि नेत्रोंसे संयुक्त हुआ घट, उसमें सम-वेत हुआ रूप, उसमें रूपत्वका समवाय है।

शब्दप्रत्यक्षे कः सन्निकर्षः ?

श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः कर्ण-विवरवर्त्याकाशस्य श्रोत्रत्वाच्छब्दस्याकाशगुणत्वात् गुणगुणिनोश्च समवायात्।

समवायसन्निकर्षमुदाहरति—श्रोत्रेणेति। जननीय इति शेषः। ननु श्रोत्रशब्दयोः कथं समवाय इत्यपेक्षमाणं प्रति तमुपपाद्य दर्शयति—कर्णेति। अथ समवायस्य नित्यत्वेन शब्दप्रत्यक्षे को व्यापार इति चेत्, शब्दः श्रोत्रमनःसंयोगो वेति गृहाण।

श्रोत्र ( कान ) से शब्दके प्रत्यक्ष करनेमें 'समवाय' सन्निकर्ष है, क्योंकि कानके विवर ( छिद्र ) में जो आकाश है वही श्रोत्रेन्द्रिय है और शब्द आकाश का गुण है, गुण और गुणी का सम्बन्ध समवाय होता है। इसलिये कानका शब्दसे समवाय सन्निकर्ष ( सम्बन्ध ) है।

शब्दत्वसाक्षात्कारे कः सन्निकर्षः ?

शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः, श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात्।

शब्दत्वेति। श्रोत्रेण जननीये इत्यनुकर्षशेषः।

श्रोत्रेन्द्रियसे शब्दत्व-जातिका प्रत्यक्षज्ञान करनेमें 'समवेत-समवाय' सन्निकर्ष है। क्योंकि—श्रोत्रमें समवाय-सम्बन्धसे रहनेवाला शब्द समवेत है, उसमें शब्दत्वजाति समवायसम्बन्धसे रहती है।

अभावप्रत्यक्षे कः सन्निकर्षः ?

अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः, घटाभाववद्भूतलमित्यत्र चक्षुःसंयुक्ते भूतले घटाभावस्य विशेषणत्वात्।

विशेषणेति। विशेषणभावो विशेष्यभावश्चेति बोध्यम्।

इन्द्रियसम्बद्धविशेषणत्वमिन्द्रियसम्बद्धविशेष्यत्वमिति यावत्। विशेषणभावसन्निकर्षमुपपाद्य दर्शयति-घटाभाववदिति। 'इह भूतले घटो' नास्तीत्यादौ विशेष्यतासन्निकर्षोऽवसेयः—सप्तम्यन्तस्य विशेषणत्वात्।

घटाभाव, पटाभाव, मठाभाव आदि अभावोंका नेत्र आदि इन्द्रियों से प्रत्यक्ष करनेमें विशेषणविशेष्यभाव सन्निकर्ष है, क्योंकि—'घटाभाववद्भूतलम्' 'पटाभाववद्भूतलम्' इत्यादि स्थलोंमें नेत्रसे संयुक्त भूतलमें घटाभाव, पटाभाव आदि विशेषण हैं और भूतल विशेष्य है। 'भूतले घटाभावः' (भूतलनिरूपितवृत्तितावान् घटाभावः) यहां पर नेत्र से संयुक्त भूतल है, वह विशेषण और घटाभाव विशेष्य है।

प्रत्यक्षप्रमाणस्य निष्कृष्टं लक्षणं किम्?

एवं सन्निकर्षषट्कजन्यं ज्ञानं प्रत्यक्षं तत्करणमिन्द्रियं तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।

प्रत्यक्षप्रमाणमुपसंहरति—एवमिति। उपदर्शितक्रमेणेत्यर्थः। ननु सिद्धान्ते प्रत्यक्षज्ञानकरणमिन्द्रियार्थसन्निकर्षः किं न स्यादिति चेन्नेत्याह—तत्करणमिति। प्रत्यक्षप्रमाणं निगमयति—तस्मादिति। प्रत्यक्षप्रमाकरणत्वादित्यर्थः।

सिद्धमिति । न्यायसिद्धान्ते सिद्धमित्यर्थः । इति पदकृत्यके प्रत्यक्षपरिच्छेदः ॥

इस प्रकार—संयोग, संयुक्त समवाय आदि छ सन्निकर्षों से जो ज्ञान होता है वही 'प्रत्यक्ष' कहा जाता है। इस तरहका जो ज्ञान होता है उसका करण नेत्र आदि इन्द्रियां हैं, इसलिए इन्द्रियां ही प्रत्यक्ष प्रमाण हैं।

इति प्रत्यक्षपरिच्छेदः ।

---

## अथाऽनुमानखण्डम्

अनुमानस्य किं लक्षणम् ?

[1]अनुमितिकरणमनुमानम् ।

प्रत्यक्षानुमानयोः कार्यकारणभावसङ्गतिमभिप्रेत्य प्रत्यक्षानन्तरमनुमानं निरूपयति—अनुमितीति । अनुमितेः करणमनुमानमित्यर्थः । तच्च लिङ्गपरामर्श एवेति निवेदयिष्यते । कुठारादावतिव्याप्तिवारणाय अनुमितीति । प्रत्यक्षादावतिव्याप्तिवारणाय अन्विति ।

---

१. अनुमितिनिष्ठकार्यतानिरूपितासाधारणकारणताशालिज्ञानत्वमनुमानस्य लक्षणम् ।

अनुमितिका करण 'अनुमान' कहलाता है ।

अनुमितिः का ?

[1]परामर्शजन्यं ज्ञानमनुमितिः ।

नन्वनुमितेरेव दुर्निरूपत्वात्तद्घटितानुमानमपि दुर्निरूपमित्यत आह—परामर्शेति । प्रत्यक्षादावतिव्याप्तिवारणाय परामर्शजन्यमिति । परामर्शध्वंसवारणाय ज्ञानमिति परामर्शप्रत्यक्षवारणाय हेत्वविषयकमित्यपि बोध्यम् ।

परामर्श ज्ञानसे जन्य ( उत्पन्न ) जो ज्ञान होता है वह 'अनुमिति' कहलाता है ।

परामर्शस्य किं स्वरूपम् ?

[2]व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानं परामर्शः । तज्जन्यं पर्वतो वह्निमानिति ज्ञानमनुमितिः ।

व्याप्तिविशिष्टेति । विषयितासम्बन्धेन व्याप्तिविशिष्टं पक्षधर्मताज्ञानं परामर्श इत्यर्थः । घटादिज्ञानवारणाय पक्ष-

---

१. तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारत्वम् । परामर्शजन्यत्वविशिष्टज्ञानत्वमनुमितिसामान्यलक्षणम् । २. व्याप्तिप्रकारकाभिन्नत्वे सति पक्षसम्बन्धविषयकत्वविशिष्टज्ञानत्वं परामर्शलक्षणम् ।

धर्मतेति। धूमवान्पर्वतः इत्यादिज्ञानवारणाय व्याप्तिविशिष्टेति। तदिति। परामर्शजन्यमित्यर्थः।

वह्नि की जो व्याप्ति ( सम्बन्ध ), उससे विशिष्ट जो धूम, उसका जो पर्वत में वैशिष्ट्यज्ञान अर्थात् 'व्याप्ति-विशिष्टहेतु पर्वत में है' ऐसा जो ज्ञान उसी का नाम परामर्श है। उस 'परामर्श' का आकार 'वह्निव्याप्यधूमवानयं' पर्वतः (वह्निव्याप्तिविशिष्ट धुआं वाला यह पर्वत है) यह है। और इस परामर्श से उत्पन्न 'पर्वत अग्निमान् है' यह ज्ञान अनुमिति है।

व्याप्तिः का ?

[1]यत्र यत्र धूमस्तत्र तत्राग्निरिति साहचर्यनियमो व्याप्तिः।

यत्र यत्रेति। यत्र यत्र धूमस्तत्र तत्राग्निरिति व्याप्तेरभिनयः। तत्र साहचर्यनियम इति लक्षणम्। सहचरतीति सहचरस्तस्य भावः साहचर्यं सामानाधिकरण्यमिति यावत्। तस्य नियमो व्याप्तिरित्यर्थः। स चाव्यभिचरितत्वम्। तच्च

१. हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिसिद्धान्तलक्षणम्।

व्यभिचाराभावः। व्यभिचारश्च साध्याभाववद्वृत्तित्वम्। तथा च साध्याभाववद्वृत्तित्वव्याप्तिरिति पर्यवसन्नम्। महानसं वह्निमत् धूमादित्यादौ साध्यो वह्निस्तदभाववान् जलह्रदादिस्त-द्वृत्तित्वं नौकादाववृत्तित्वं प्रकृते। हेतुभूते धूमे इति कृत्वा लक्षणसमन्वयः। धूमवान् वह्निरित्यादौ साध्यो धूमस्तदभा-ववदयोगोलकं तद्वृत्तित्वमेव वह्न्यादाविति नातिव्याप्तिः।

नियम से ( तीनों कालों में ) परस्पर दोनों के एक साथ में रहने को व्याप्ति कहते हैं। उस व्याप्ति का आकार 'यत्र यत्र धूमस्तत्र तत्राग्निः' ( जिस-जिस स्थान में धूम है उस-उस स्थान में निश्चय ही वह्नि है ) यह है।

[ व्याधि एक सम्बन्ध है, जो साध्य और हेतु का होता है। वह हेतु में रहता है और साध्य से आता है अर्थात् साध्यनिरूपित और हेतुनिष्ठ नियम से ( व्यापक ) सामानाधिकरण्य, यही व्याप्ति पदार्थ है। ]

पक्षधर्मतायाः किं लक्षणम्?

व्याप्यस्य पर्वतादिवृत्तित्वं [1]पक्षधर्मता।

---

१. व्याप्यनिष्ठाधेयतानिरूपितपक्षनिष्ठाधिकरणशालिज्ञानत्वम्पक्ष-धर्मतालक्षणम्।

ननु ज्ञातेयं व्याप्तिः पक्षधर्मताज्ञानमित्यत्र का नाम पक्षधर्मता इत्यपेक्षमाणं प्रति तत्स्वरूपं निरूपयति—व्याप्यस्येति। व्याप्यो नाम व्याप्त्याश्रयः, स च धूमादिरेव तस्य पर्वतादिवृत्तित्वं पक्षधर्मतेत्यर्थः।

व्याप्य ( व्याप्तिविशिष्ट धूम आदि ) का पर्वत आदि पक्ष में रहना—इसे 'पक्षधर्मता' कहते हैं।

अनुमानं कतिविधम् ?

अनुमानं द्विविधं-स्वार्थं परार्थं च।

अथ कथमनुमानमनुमितिकरणं कथं वा तस्मादनुमितेर्जनिरिति जिज्ञासमानं प्रति लाघवादनुमानविभागमुखेनैव बुबोधयिषुरनुमानं विभजते—अनुमानमिति। द्वैविध्यं दर्शयति-स्वार्थं परार्थं चेति। स्वस्यार्थः प्रयोजनं यस्मात् तत् स्वार्थमिति समासः। स्वप्रयोजनं च स्वस्यानुमेयप्रतिपत्तिः। एवं परार्थमित्यस्यापि।

अनुमितिकरणरूप अनुमान दो तरह का है स्वार्थ अनुमान और परार्थ अनुमान।

किं नाम स्वार्थानुमानम् ?

[1]स्वार्थं स्वानुमितिहेतुः, तथाहि—स्वयमेव भूयो

१. न्यायाप्रयोज्यत्वे सति स्वार्थानुमितिहेतुत्वं स्वार्थानुमानलक्षणम्।

दर्शनेन यत्र यत्र धूमस्तत्र तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतस्तद्गते चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति—'यत्र यत्र धूमस्तत्र तत्राग्निरि'ति। तदनन्तरं वह्निव्याप्यधूमवानयं पर्वत इति ज्ञानमुत्पद्यते। अयमेव लिङ्गपरामर्श इत्युच्यते। तस्मात् पर्वतो वह्निमानिति ज्ञानमनुमितिरुत्पद्यते तदेतत् स्वार्थानुमानम्।

अयमिति। व्याप्तिबलेन लीनमर्थं गमयतीति लिङ्गम्, तच्च धूमादि, तस्य परामर्शो ज्ञानविशेष इत्यर्थः। तस्मादिति। लिङ्गपरामर्शादित्यर्थः। स्वार्थानुमानमुपसंहरति–तदेतदिति। यस्मादिदं स्वप्रतिपत्तिहेतुस्तस्मादेतत्स्वार्थानुमानमित्यर्थः।

अनुमान करनेवाले को स्वयं जिस अनुमानसे अनुमिति हो वह 'स्वार्थ-अनुमान' कहलाता है। यथा–कोई मनुष्य बार-बार महानस ( रसोई घर ) आदि में धूआँ और आग को एक साथ रहते देखकर 'जहाँ धूआँ रहता है वहाँ आग निश्चय रहती है' इस तरह से व्याप्ति का निश्चय कर बाद में पर्वत के समीप जाकर इस पर्वत में आग है या नहीं

इस तरह का सन्देह करता है। फिर तत्क्षण ही उस पर्वत में धूआं को देखकर 'जहां-धूआं रहता है वहां आग निश्चय ही रहती है' इस व्याप्ति का स्मरण करता है। इसके बाद उसे 'वह्निव्याप्य धूमवाला यह पर्वत है' ऐसा ज्ञान पैदा होता है। यही ज्ञान 'लिङ्गपरामर्श' है। इस ज्ञानसे उस मनुष्य को 'पर्वतमें आग है' यह ज्ञान पैदा होता है। यही 'स्वार्थानुमिति' कहलाती है। अपने अनुमिति का साधक होनेसे यह 'स्वार्थानुमान' हुआ।

## परार्थानुमानस्य किं स्वरूपम् ?

यत्तु स्वयं धूमादग्निमनुमाय परं प्रति बोधयितुं पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानम्[1]। यथा—पर्वतो वह्निमान् धूमवत्त्वात्, यो यो धूमवान् स स वह्निमान् यथा महानसम्, तथा चायम्, तस्मात्तथेति। अनेन प्रतिपादिताल्लिङ्गात् परोऽप्यग्निं प्रतिपद्यते।

क्रमप्राप्तं परार्थानुमानमाह—यत्त्विति। यत्पञ्चावयववाक्यं प्रयुज्यते तत्परार्थानुमानमिति सम्बन्धः। पञ्चावय-

---

१. प्रतिज्ञादिपञ्चकसमुदायत्वरूपन्यायप्रयोज्यत्वे सत्यनुमानत्वम् परार्थानुमानलक्षणम्।

वेति । अथावयवत्वं नाम द्रव्यसमवायिकारणत्वम्, प्रतिज्ञादिषु तदसम्भवात्कथमेतेऽवयवाः स्युरिति चेत् । अनुमानवाक्यैकदेशत्वात्तु अवयवा इत्युपचर्यंत इति गृहाण । नन्वेवमपि पंचावयववाक्यस्यानुमानत्वमेव न विचारसंहतस्य लिङ्गपरामर्शत्वाभावादिति चेत् । मैवम् । लिङ्गपरामर्शप्रयोज्यलिङ्गप्रतिपादकत्वेनानुमानमित्युपचारमात्रत्वात् । तदुदाहरति—यथेति । तथा चायमिति । अयं च पर्वतः, तथा—वह्निव्याप्यधूमवानित्यर्थः । तस्मात्तथेति । वह्निव्याप्यधूमवत्त्वाद्वह्निमानित्यर्थः । अनेनेति । अनेन पंचावयववाक्येनेत्यर्थः ।

स्वयं धूमरूप हेतुसे अग्नि का अनुमान करके दूसरे व्यक्ति को बोध कराने के लिए 'पर्वतो वह्निमान् धूमाद्' इत्यादि पञ्चावयव वाक्य का जो प्रयोग किया जाता है, वह 'परार्थानुमान' है। पांच वाक्य यथा—१ पर्वत में आग है। २ धूमके रहने से। ३ जहां-जहां धूम रहता है वहां-वहां अग्नि निश्चय रहती है, जैसे-रसोईके घरमें। ४ वैसे ही इस पर्वत में भी वह्निव्याप्य धूम दिखलाई पड़ता है। ५ इसलिए इस पर्वत में भी आग निश्चय रहती है। इस

प्रकार पञ्चावयववाक्य से कहे हुए लिङ्ग द्वारा दूसरे मनुष्य भी पर्वत में अग्नि का अनुमान कर लेते हैं।

पञ्चावयवाः के ?

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः[1]। पर्वतो वह्निमानिति प्रतिज्ञा[2]। धूमवत्त्वादिति हेतुः[3]। यो यो धूमवान् स स वह्निमानित्युदाहरणम्[4]। तथा चायमित्युपनयः[5]। तस्मात्तथेति निगमनम्[6]।

ननु पञ्चावयववाक्यमित्यत्र के ते पञ्चावयवा अतस्तान्दर्शयति–प्रतिज्ञेति। प्रतिज्ञाद्यन्यतमत्वमवयवत्वम्। साध्यविशिष्टपक्षबोधकवचनं प्रतिज्ञा पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनं हेतुः। व्याप्तिप्रतिपादकदृष्टान्तवचनमुदाहरणम्। उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनमुपनयः। पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनं निगमनम्।

---

१. प्रतिज्ञाद्यन्यतमत्वमवयवत्वम्। २. साध्यविशिष्टपक्षबोधकवचनम् प्रतिज्ञा। ३. पञ्चम्यन्तं तृतीयान्तं वा लिङ्गवचनं हेतुः। ४. व्याप्तिप्रतिपादकदृष्टान्तवचनमुदाहरणम्। ५. उदाहृतव्याप्तिविशिष्टत्वेन हेतोः पक्षधर्मताप्रतिपादकवचनमुपनयः। ६. पक्षे साध्यस्याबाधितत्वप्रतिपादकवचनं निगमनम्।

इदमेव लक्षणं हृदि निधाय प्रतिज्ञादीन्विशिष्य दर्शयति—पर्वतो वह्निमानित्यादिना ।

अवयव पांच तरह के होते हैं—प्रतिज्ञा, हेतु, उदाहरण, उपनयन और निगमन । 'प्रतिज्ञा' जैसे—'पर्वतो वह्निमान्' ( पर्वतमें आग है ) । 'हेतु' जैसे—'धूमात्' ( क्योंकि पर्वत में धूम है ) । 'उदाहरण' जैसे—'यो यो धूमवान् स स वह्निमान्, यथा महानसम्' ( जहां-जहां धूम है वहां-वहां आग रहती है । जैसे—पाकशाला में ) । 'उपनय' जैसे—'तथा चायम्' ( यह पर्वत भी रसोईघरके समान वह्निव्याप्य धूमवाला है ) । 'निगमन' जैसे—'तस्मात्तथा' ( अतः यह भी वह्निमान् है ) ।

स्वार्थानुमितिपरार्थानुमित्योः किं करणम् ?

स्वार्थानुमितिपरार्थानुमित्योर्लिङ्गपरामर्श एव करणम् । तस्माल्लिङ्गपरामर्शोऽनुमानम् ।

लिङ्गेति । ज्ञायमानं लिङ्गमनुमितिकरणमिति वृद्धोक्तं न युक्तम्, इयं यज्ञशाला वह्निमती अतीतधूमादित्यादौ लिङ्गाभावेऽप्यनुमितिदर्शनादित्यभिप्रायवांल्लिङ्गपरामर्श एव करणमि-

त्याचष्टे—लिङ्गपरामर्श एवेति । अनुमानमुपसंहरति—तस्मादिति । अनुमितिकरणत्वादित्यर्थः । अयमेव तृतीयज्ञानमित्युच्यते । तथाहि—महानसे धूमाग्न्योर्व्याप्तौ गृह्यमाणायां यद्धूमज्ञानं तदादिमम् । पक्षे यत् धूमज्ञानं तद्द्वितीयम् । अत्रैव वह्निव्याप्यत्वेन यद्धूमज्ञानं तत्तृतीयम् । इदमेव लिङ्गपरामर्श इत्युच्यते । अनुमानमिति । व्यापारवत्कारणं करणमिति मते व्याप्तिज्ञानमेवानुमानं लिङ्गपरामर्शो व्यापार इत्यवसेयम् ।

स्वार्थानुमिति और परार्थानुमिति इन दोनों का असाधारणकारणरूप करण लिङ्गपरामर्श ( 'वह्निव्याप्य धूमवान् पर्वतः' ऐसा ज्ञान ) ही है । अतः लिङ्गपरामर्श ही अनुमान प्रमाण है ।

लिङ्गं कतिविधं किञ्चान्वयव्यतिरेकिलक्षणम् ?

लिङ्गं त्रिविधम्–अन्वयव्यतिरेकि[१]–केवलान्वयि–केवलव्यतिरेकि चेति । अन्वयेन व्यतिरेकेण च व्या-

१. व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टत्वे सति साध्याभावप्रतियोगित्वरूपव्याप्तिविशिष्टत्वमन्वयव्यतिरेकिलक्षणम् ।

ग्निमदन्वव्यतिरेकि, यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निर्यथा महानसमित्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्ति यथा ह्रद इति व्यतिरेकव्याप्तिः ।

अन्वयव्यतिरेकिणो लक्षणमाह—अन्वयेति । तृतीयायाः प्रयोज्यत्वमर्थः । साध्यसाधनयोः साहचर्यमन्वयः । तदभावयोः साहचर्यं व्यतिरेकः, यथा चान्वयप्रयोज्यव्याप्तिमद्व्यतिरेकप्रयोज्यव्याप्तिमदन्वयव्यतिरेकीत्यर्थः । केवलव्यतिरेकिण्यतिव्याप्तिवारणाय अन्वयेनेति । केवलान्वयिनि व्यभिचारवारणाय व्यतिरेकेणेति । तथा चान्वयव्याप्तिरुपदर्शितैव । व्यतिरेकव्याप्तिश्च साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः । तदुक्तं—

व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते ।
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥इति॥

'लिङ्ग' ( हेतु ) तीन प्रकार का है—अन्वयव्यतिरेकि,

केवलान्वयि और केवलव्यतिरेकि इस भेद से। 'अन्वय-व्यतिरेकि' यह कहलाता है जिस लिङ्ग में अन्वयव्याप्ति और व्यतिरेकव्याप्ति ये दोनों व्याप्ति हों। जैसे—वह्नि के अनुमान में धूमरूप हेतु अन्वयव्यतिरेकि है। 'जहां धूम है वहां आग है' जैसे-रसोई के घर में। यह अन्वयव्याप्ति है 'जहां आग नहीं है वहां धूम भी नहीं है' जैसे तालाब में। यह 'व्यतिरेकव्याप्ति' ( अभावों की व्याप्ति ) है।

केवलान्वयिनः किं लक्षणम् ?

अन्वयमात्रव्याप्तिकं केवलान्वयि[1]। यथा घटोऽभिधेयः प्रमेयत्वात् पटवत्। अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्तिर्नास्ति, सर्वस्यापि प्रमेयत्वादभिधेयत्वाच्च।

केवलान्वयिनो लक्षणमाह—अन्वयेति। अन्वयेनैव व्याप्तिर्यस्मिन् स तथा। प्रमेयत्वाभिधेयत्वयोर्व्यतिरेकव्याप्ति निराकरोति—अत्रेति। अभिधेयत्वसाध्यकानुमान इत्यर्थः।

---

१. व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयित्वम्। केवलान्वयिसाध्यकत्वं वा। स्वविरोधिवृत्तिमदत्यन्ताभावाप्रतियोगित्वं वा।

ननु कुतस्तन्निषेधोऽतस्तत्र हेतुमाह—सर्वस्येति। पदार्थमात्रस्येत्यर्थः। तथा च सकलपदाभिधेयत्वस्येश्वरप्रमाविषयत्वस्य चात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वेन तदभावप्रसिद्ध्या तद्घटितव्यतिरेकव्याप्तिर्न सम्भवत्येवेति भावः।

जिस लिङ्ग ( हेतु ) में केवल अन्वयव्याप्ति हो वह केवलान्वयि है। जैसे—घटोऽभिधेयः प्रमेयत्वात् पटवत्' ( घट अभिधेय है क्योंकि इसमें प्रमेयत्व है )। यहां प्रमेयत्व हेतु केवलान्वयि है। यतः प्रमेयत्व और अभिधेयत्व सभी पदार्थों में है और उनका अभाव कहीं नहीं है। अतः उसके अभाव की व्याप्ति नहीं हो सकती।

केवलव्यतिरेकिणः किं लक्षणम् ?

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि[1]। यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्; यदितरेभ्यो न भिद्यते न तद्गन्धवत्, यथा जलम्। न चेयं तथा। तस्मान्न तथेति। अत्र यद्गन्धवत् तदितरभिन्नमित्यन्वयदृष्टान्तो नास्ति, पृथिवीमात्रस्य पक्षत्वात्।

१. निश्चितान्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकिलक्षणम्।

केवलव्यतिरेकिणो लक्षणमाह—व्यतिरेकेति । व्यतिरेकेणैव व्याप्तिर्यस्मिस्तत्तथा । अन्वयव्यतिरेकिण्यतिव्याप्तिवारणाय मात्रेति । न चेयं तथेति । इयं पृथिवी, न तथा—न गन्धाभाववतीत्यर्थः । तस्मान्न तथेति । गन्धाभाववत्त्वाभावादितरभेदाभाववती नेत्यर्थः । नन्वत्र किमिति नान्वयव्याप्तिरित्याशङ्क्य परिहरति—अत्रेति । इतरभेदसाधकानुमान इत्यर्थः । इदमुपलक्षणम् । जीवच्छरीरं सात्मकं प्राणादिमत्त्वात् यन्नैवम् तन्नैवम् यथा घटः । प्रत्यक्षादिकं प्रमाणमिति व्यवहर्तव्यं प्रमाकरणत्वात् यन्नैवं यथा प्रत्यक्षाभासः ! विवादास्पदम् आकाशमिति व्यवहर्तव्यं शब्दवत्त्वादित्यादिकमपि केवलव्यतिरेकीति द्रष्टव्यम् ।

अत्रेदं बोध्यम्—अन्वयव्यतिरेकि तु पञ्चरूपोपपन्नं स्वसाध्यं साधयितुं क्षमते, तानि कानि ? इति चेत् श्रूयताम्—पक्षधर्मत्वं सपक्षसत्त्वम् विपक्षाद्व्यावृत्तिरबाधितविषयत्वमसत्प्रतिपक्षत्वं चेति । अबाधितः साध्यरूपो विषयो यस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम् । एवं साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्ष इत्युच्यते, स नास्ति यस्य सोऽसत्प्रतिपक्षः, तस्य भावस्तत्त्वमिति बोध्यम् । केवलान्वयि तु

चतूरूपोपपन्नमेव स्वसाध्यं साधयितुं क्षमते, तस्य विपक्षविपर्ययेण तद्व्यावृत्तिविपर्ययात्। केवलव्यतिरेक्यपि तथा, तस्य सपक्षविपर्ययेण तत्सत्त्वविपर्ययादिति, उपदर्शितरूपाणां मध्ये कतिपयरूपोपपन्नत्वात्।

जिसमें केवल व्यतिरेकव्याप्ति हो वह 'केवलव्यतिरेकि' हेतु है। जैसे—पृथिवी अन्य (जलादि) पदार्थों से भिन्न है, क्योंकि गन्ध रहने से। जो अन्य पदार्थोंसे भिन्न नहीं है उसमें गन्ध भी नहीं होती। जैसे—जल। पृथ्वी इतर पदार्थों की तरह गन्धरहित नहीं है। इसलिये पृथिवी इतर (जलादि) पदार्थों से भिन्न है। इस तरह भेदसाधक अनुमिति ( जो पदार्थ गन्धवाला है वह इतर पदार्थों से अलग है ) में अन्वय दृष्टान्त नहीं है, क्योंकि यहां तो पृथिवीमात्र को ही पक्ष बना लिया गया है। इसलिए पृथिवीत्व हेतु केवलव्यतिरेकि हुआ।

पक्षस्य किं लक्षणम् ?

सन्दिग्धसाध्यवान् पक्षः[1]। यथा धूमवत्त्वे हेतौ पर्वतः।

---

१. साध्यप्रकारकत्वविशिष्टसंशयविशेष्यत्वम् पक्षत्वम्। अनुमित्युद्देश्यत्वं वा।

अथ पृथिवीमात्रस्य पक्षत्वादित्यत्र किं नाम पक्षतेत्यपेक्षायां तां निर्वक्ति—सन्दिग्धेति। सपक्षवारणाय सन्दिग्धेति।

जिसमें साध्य का सन्देह हो वह 'पक्ष' है। जैसे—धूम हेतु होने पर पर्वत पक्ष है।

[ 'पर्वतो वह्निमान् धूमात्' यहाँ पर्वत में साध्य का सन्देह हुआ अतः 'पर्वत' पक्ष है। जिसका सन्देह हो वह साध्य कहलाता है, इसलिये 'वह्नि' साध्य है। जिससे साध्य का निश्चय किया जाय वह हेतु कहलाता है। इसलिये 'धूम' हेतु है। सर्वत्र साध्य-अनुमितिमें साध्यके प्रति हेतु को व्याप्य और साध्य को व्यापक समझना चाहिये। ]

सपक्षस्य किं लक्षणम् ?

निश्चितसाध्यवान् सपक्षः[1]। यथा तत्रैव महानसम्।

निश्चितेति। पक्षेऽतिव्याप्तिवारणाय निश्चितेति। तत्रैवेति। धूमवत्त्वहेतावेवेत्यर्थः।

'सपक्ष' ( दृष्टान्त ) वह कहलाता है, जिसमें, साध्य का निश्चय हो। यथा—तत्रैव ( 'पर्वतो वह्निमान्' इसी

१. साध्यप्रकारकत्वविशिष्टनिश्चयविशेष्यत्वं सपक्षत्वम्।

स्थल में ) महानसम् ( पाकशाला ) दृष्टान्त है । क्योंकि यहां वह्नि की सत्ता निश्चित है ।

विपक्षस्य किं लक्षणम् ?

निश्चितसाध्याभाववान् विपक्षः[1] । यथा तत्रैव महाह्रदः ।

निश्चितेति । सपक्षेऽतिव्याप्तिवारणाय साध्येति । पक्षेऽतिव्याप्तिवारणाय निश्चितेति । तत्रैव—धूमवत्त्व एव ।

'विपक्ष' वह कहलाता है—जिसमें साध्य के अभाव का निश्चय हो । जैसे—पर्वतो वह्निमान् 'धूमात्' इत्यादि वह्नि-साध्य स्थल में—समुद्र, तालाब, झील आदि विपक्ष हैं । क्योंकि इन सबों में साध्य ( वह्नि ) नहीं रहता है ।

हेत्वाभासाः कतिविधाः ?

सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च हेत्वाभासाः[2] ।

हेतून्निरूप्य प्रसङ्गाद्धेत्वाभासानाह—सव्यभिचारेति ।

---

१. साध्याभावप्रकारकनिश्चयविशेष्यत्वं विपक्षलक्षणम् ।

२. यद्विषयकत्वेन ज्ञानस्य अनुमितितत्करणान्यतरविरोधित्वं तत्त्वमिति हेत्वाभाससामान्यलक्षणम् ।

हेतुवदाभासन्ते इति हेत्वाभासाः। तत्त्वं चानुमितितत्करणा-न्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वम्। बाधस्थले वह्निरनुष्ण-इत्यनुमितिप्रतिबन्धकं यज्ज्ञानमुष्णत्ववद्वह्नावनुष्णत्वसाधकं द्रव्यत्वमित्याकारकं तद्विषयत्वस्य विषयतासम्बन्धेन द्रव्यत्वरू-पहेत्वाभासे सत्त्वाल्लक्षणसमन्वयः। सद्धेतुवारणाय यथार्थेति। घटादिवारणाय अनुमितितत्करणान्यतरप्रतिबन्धकेति। व्यभि-चारिणि अव्याप्तिवारणाय तत्करणान्यतरेति।

[ 'हेतु' का निरूपण करके अब 'हेत्वाभास' (दुष्ट हेतु) का निरूपण करते हैं—यथार्थ में जो हेतु नहीं हो पर हेतु की तरह प्रतीत होता हो वह 'हेत्वाभास' कहलाता है। ]

( वह ) 'हेत्वाभास' पांच प्रकार का है—सव्यभिचार, विरुद्ध, सत्प्रतिपक्ष, असिद्ध और बाधित, इस भेद से।

सव्यभिचारस्य किं लक्षणं कतिविधश्च सः ?

[1]सव्यभिचारोऽनैकान्तिकः स त्रिविधः-साधार-णाऽसाधारणाऽनुपसंहारिभेदात्।

'सव्यभिचार'—जिसको अनैकान्तिक ( व्यभिचारी )

१. साधारणाद्यन्यतमत्वं सव्यभिचारस्य लक्षणम्।

भी कहते हैं, वह तीन प्रकार का है—साधारण, असाधारण और अनुपसंहारी, इस भेद से ।

साधारणस्य किं लक्षणम् ?

तत्र साध्याभाववद्वृत्तिः[1] साधरणोऽनैकान्तिकः । यथा 'पर्वतो वह्निमान् प्रमेयत्वादि'ति । अत्र प्रमेयत्वस्य वह्न्यभाववति ह्रदे विद्यमानत्वत् ।

तत्रेति । साधारणादित्रितयमध्य इत्यर्थः । अथ विरुद्धेऽतिप्रसक्तिरिति मा स्म दृप्यः, सपक्षवृत्तित्वस्यापि निवेशात् । अथैवमपि स्वरूपासिद्धे दूषणं जागर्तीति मा वह गर्वम्, पक्षवृत्तत्वस्यापि तथात्वात् ।

साधारण हेतु ( साधारण व्यभिचारी हेत्वाभास ) वह कहलाता है, जो साध्याभाव के अधिकरणमें रहने वाला हो । जैसे—'पर्वतो वह्निमान् , प्रमेयत्वात्' (अर्थात् पर्वत में आग है क्योंकि इसमें प्रमेयत्व रहता है ) इस स्थल में जो प्रमेयत्व हेतु है, वह साध्याभाव (वह्न्यभाव) के अधिकरण जलादि में भी रहता है । क्योंकि 'सर्वं प्रमेयम्' । सब

१. साध्याभावाधिकरण [illegible]

पदार्थों में प्रमाविषयस्वरूप प्रमेयत्व रहता है। अतः यह हेतु साधारण अनैकान्तिक (व्यभिचारी) है।

असाधारणस्य किं लक्षणम्?

सर्वसपक्षविपक्षव्यावृत्तः पक्षमात्रवृत्तिरसाधारणः[1]। यथा 'शब्दो नित्यः शब्दत्वादि'ति। अत्र शब्दत्वं हि सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्दमात्रवृत्ति।

पक्षमात्रेति। सर्वे ये सपक्षा विपक्षास्तेभ्यो व्यावर्तत इति सपक्षविपक्षव्यावृत्तः। केवलव्यतिरेकिवारणाय तद्भिन्न इत्यपि देयम्।

'असाधारणहेतु' वह कहलाता है, जो हेतु सभी सपक्षों और विपक्षों में न हो किन्तु पक्षमात्र में ही रहे। जैसे— 'शब्दो (पक्ष) नित्यः (साध्य) शब्दत्वात्' (हेतु)। (अर्थात् शब्द नित्य है, क्योंकि इसमें शब्दत्व रहता है) इस जगह जो शब्दत्वरूप हेतु है, वह सभी नित्य आकाशादि और अनित्य घटादि पदार्थों में नहीं रहता,

१. निश्चितसाध्याधिकरणावृत्तित्वे सति निश्चितसाध्याभावाधिकरणावृत्तित्वे सति पक्षमात्रवृत्तित्वमसाधारणत्वम्।

किन्तु शब्द में ही रहता है। इसलिये यह हेतु असाधारण-व्यभिचारी हेत्वाभास है।

अनुपसंहारिणः किं लक्षणम् ?

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी[1]। यथा सर्वमनित्यं प्रमेयत्वादिति। अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति।

अन्वयेति। केवलान्वयिन्यतिव्याप्तिवारणाय अन्वयेति। केवलव्यतिरेकिण्यतिव्याप्तिवारणाय व्यतिरेकेति। अत्रेति। उपदर्शितानुमान इत्यर्थः।

'अनुपसंहारी' हेतु वह कहलाता है, जो हेतु अन्वय-व्याप्ति और व्यतिरेकव्याप्ति के दृष्टान्तसे रहित हो। जैसे—'सर्वमनित्यं प्रमेयत्वात्' ( अर्थात् सभी पदार्थ अनित्य हैं, क्योंकि सभी में प्रमेयत्व रहता है ) इस स्थल में सभी पदार्थ पक्ष के अन्तर्भूत हैं, अतः कोई भी दृष्टान्तस्थल

---

१. अन्वयदृष्टान्तहीनत्वे सति व्यतिरेकदृष्टान्तशून्यत्वम् अनुपसंहारित्वम्। अत्यन्ताभावाप्रतियोगिसाध्यकत्वं वा।

नहीं है। इसलिये यह प्रमेयत्वरूप हेतु अनुपसंहारी अनैकान्तिक हेत्वाभास है।

विरुद्धस्य किं लक्षणम् ?

साध्याभावव्याप्तो हेतुर्विरुद्धः[1] यथा शब्दो नित्यः कृतकत्वाद् घटवदिति। अत्र कृतकत्वं हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम्।

विरुद्धं लक्षयति—साध्येति। सद्धेतुवारणाय साध्याभावव्याप्त इति। सत्प्रतिपक्षवारणाय सत्प्रतिपक्षभिन्न इत्यपि बोध्यम्। कृतकत्वादिति। कार्यत्वादित्यर्थः। कृतकत्वमिति। अनित्यत्वेन व्याप्तमिति। यद्यत्कृतकं तत्तदनित्यमिति व्याप्तिर्भवत्येव तथेति भावः।

[ तीनों प्रकारों के सव्यभिचारों ( अनैकान्तिकों ) का निरूपण करके अब विरुद्ध हेत्वाभासका निरूपण करते हैं]—

'विरुद्ध हेत्वाभास' वह कहलाता है, जो हेतु साध्याभाव से व्याप्त हो, जैसे—शब्दो नित्यः, कृतकत्वात्,

१. साध्याभावनिरूपितव्याप्तिविशिष्टत्वे सति हेतुत्वं विरुद्धहेत्वाभासलक्षणम्।

घटवत्' ( अर्थात् शब्द नित्य है, क्योंकि उसमें घट के ऐसा कृतकत्व ( कार्यत्व ) रहने से )। इस स्थल में कृतकत्वरूप हेतु नित्यत्वाभाव ( अनित्यत्व ) से व्याप्त है। तस्मात् यह कृतकत्वरूप हेतु विरुद्ध ( साध्यविरोधि ) हेतु कहलाता है।

सत्प्रतिपक्षस्य किं लक्षणम् ?

साध्याभावसाधकं हेत्वन्तरं यस्य स सत्प्रतिपक्षः[1]। यथा शब्दो नित्यः श्रावणत्वाच्छब्दत्ववत्। शब्दोऽनित्यः कार्यत्वाद् घटवत्।

सत्प्रतिक्षं लक्ष्यति—साध्येति। यस्य हेतोः साध्याभावसाधकं साध्याभावस्यानुमापकं हेत्वन्तरं प्रतिपक्षो हेतुः विद्यते स हेतुः सत्प्रतिपक्ष इत्यर्थः। अयमेव प्रकरणसम इत्युच्यते। विरुद्धवारणाय हेत्वन्तरं यस्येति, वह्न्यादिवारणाय साध्याभावेति।

'सत्प्रतिपक्ष हेत्वाभास' वह कहलाता है, जिस हेतु के साध्याभाव का साधन ( सिद्ध करने वाला ) दूसरा हेतु हो। जैसे—'शब्दो नित्यः, श्रावणत्वात्, शब्दत्ववत्'

---

१. प्रकृतपक्षसम्बन्धिसाध्याभावव्याप्यपक्षत्वं सत्प्रतिपक्षत्वम्।

( शब्द नित्य है क्योंकि उसमें श्रवणेन्द्रियग्राह्यत्व रहता है। जैसे—शब्दत्वजाति )। इस स्थल में 'शब्दोऽनित्यः कार्यत्वात्, घटवत्' ( शब्द अनित्य है क्योंकि उसमें कार्यत्व रहता है, जैसे—घट) यहाँ कार्यत्वरूप हेतु साध्याभाव का साधक ( अनुमापक ) बनकर बैठा है तस्मात् श्रावणत्वरूप हेतु 'सत्प्रतिपक्ष-हेत्वाभास' कहलाता है। इसी तरह कार्यत्वरूप हेतु का नित्यत्वरूप—साध्याभाव-साधक श्रावणत्वरूप दूसरा हेतु होकर बैठा है। अतः कार्यत्वरूप हेतु भी 'सत्प्रतिपक्षहेत्वाभास' कहलाता है।

असिद्धः कतिविधः ?

[1]असिद्धस्त्रिविधः—आश्रयासिद्धः स्वरूपासिद्धो व्याप्यत्वासिद्धश्चेति।

असिद्धं विभजते—असिद्ध इति। आश्रयासिद्धाद्यन्यतमत्वमसिद्धत्वम्।

'असिद्ध' हेत्वाभास तीन प्रकार का है—आश्रयासिद्ध, स्वरूपासिद्ध और व्याप्यत्वासिद्ध, इस भेद से।

१. आश्रयासिद्धाद्यन्यतमत्वम् असिद्धत्वम्।

आश्रयासिद्धो[1] यथा गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः स च नास्त्येव ।

आश्रयासिद्धत्वं च पक्षतावच्छेदकाभाववत्पक्षकत्वम् । भवति हि अरविन्दत्वे गगनीयत्वरूपपक्षतावच्छेदकाभाववत्पक्षकत्वम्–अरविन्दरूपपक्षे गगनीयत्वविरहात् । ननु कथमरविन्दे गगनीयत्वविरहोऽत आह—अत्रेति । उपदर्शितानुमान इत्यर्थः ।

[ 'आश्रयासिद्ध' वह कहलाता है, जिस हेतु का आश्रय ( पक्ष ) अप्रसिद्ध हो ]

आश्रयासिद्ध का उदाहरण यथा—'गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत्' ( अर्थात् आकाश का कमल सुगन्धित है, क्योंकि इसमें भी तालाब के कमल के समान कमलत्व है ) इस स्थल में आकाशकमलरूप आश्रय ही अप्रसिद्ध है, क्योंकि आकाश में कमल उत्पन्न होता ही

---

१. पक्षतावच्छेदकाभाववत्पक्षकत्वम् आश्रयासिद्धत्वम् ।

नहीं है। तस्मात् यह आश्रयासिद्ध हेत्वाभास का उदाहरण हुआ।

स्वरूपासिद्धस्य किं रूपम् ?

स्वरूपासिद्धो [1]यथा शब्दो गुणश्चाक्षुषत्वात्। अत्र चाक्षुषत्वं शब्दे नास्ति शब्दस्य श्रावणत्वात्।

पक्षे हेत्वभावः स्वरूपासिद्धिः। सद्धेत्वभावेऽतिव्याप्तिवारणाय पक्षे इति। घटाद्यभाववारणाय हेत्विति। सोऽयं स्वरूपासिद्धः शुद्धासिद्धभागासिद्धविशेषणासिद्धविशेष्यासिद्धभेदेन चतुर्विधः। तत्राद्यस्तूपदर्शित एव। द्वितीयो यथा—उद्भूतरूपादिचतुष्टयं गुणः रूपत्वादित्यत्र रूपत्वहेतोः पक्षैकदेशावृत्तित्वेन तस्य भागे स्वरूपासिद्धत्वम्। तृतीयो यथा—वायुः प्रत्यक्षः रूपवत्त्वे सति स्पर्शवत्त्वादित्यत्र रूपवत्त्वविशेषणस्य वायाववृत्तेस्तद्विशिष्टस्पर्शवत्त्वस्यापि तथात्वेन तस्य स्वरूपासिद्धत्वं निर्वहति, विशेषणाभावे विशिष्टस्याप्यभावात्। तुरीयो यथा—अत्रैव विशेषणविशेष्यवैपरीत्येन हेतुः। तस्य स्वरूपासिद्धत्वं तु विशेष्याभावप्रयुक्तविशिष्टाभावादिति बोध्यम्।

१. पक्षनिष्ठहेत्वभाववत्त्वं स्वरूपा ( सिद्धत्वं ) सिद्धिलक्षणम्।

[ 'स्वरूपासिद्ध' हेतु वह कहलाता है जिस हेतु का अभाव पक्ष में हो ]

'स्वरूपासिद्ध' का उदाहरण जैसे—'शब्दो गुणश्चाक्षुषत्वात्'। ( शब्द गुण है, क्योंकि उसमें चाक्षुषत्व है ) यहां पर शब्द में चाक्षुषत्व ( आंखों से देखने योग्य धर्म ) नहीं है। क्योंकि शब्द तो केवल कानों से ही सुना जाता है। तस्मात् यहां शब्दरूप पक्ष में चाक्षुषत्व रूप हेतु अप्रसिद्ध हेतु है। अतः यह शब्द स्वरूपासिद्ध हेत्वाभास है।

व्याप्यत्वासिद्धः कः, किञ्चोपाधिस्वरूपम् ?

सोपाधिको हेतुर्व्याप्यत्वासिद्धः[1]। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः। साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम्। साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम्। यथा पर्वतो धूमवान् वह्निमत्त्वादित्यत्रार्द्रेन्धनसंयोग उपाधिः। ( तथाहि ) यत्र धूमस्तत्रार्द्रेन्धनसंयोग इति साध्यव्यापकत्वम्। यत्र वह्निस्तत्रार्द्रेन्धनसंयोगो नास्ति

१. उपाधिविशिष्टत्वे सति हेतुत्वं व्याप्यत्वासिद्धलक्षणम्।

अयोगोलके आर्द्रेन्धनसंयोगाभावादिति साधनाव्यापकत्वम् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धनसंयोग उपाधिः[१] । सोपाधिकत्वाद्वह्निमत्त्वं व्याप्यत्वासिद्धम् ।

व्याप्यत्वासिद्धं निरूपयति–सोपाधिक इति । ननु कोऽयमुपाधिरत आह–साध्येति । साधनाव्यापक उपाधिरित्युक्ते शब्दोऽनित्यः कृतकत्वादित्यत्र सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्रहणार्हत्वमप्युपाधिः स्यात्तदर्थं साध्यव्यापकत्वमुक्तम् । तावत्युक्ते सामान्यवत्त्वादिनाऽनित्यत्वसाधने कृतकत्वमुपाधिः स्यात्तदर्थं साधनाव्यापकत्वम् । उपाधिभेदमादायासम्भववारणाय व्यापकत्वशरीरेऽप्यत्यन्तपदमादेयम् । साधनभेदमादाय साधनस्योपाधित्ववारणायाव्यापकत्वशरीरेऽप्यत्यन्तपदमवश्यं देयम् । सोऽयमुपाधिस्त्रिविधः–केवलसाध्यव्यापकः पक्षधर्मावच्छिन्नसाध्यव्यापकः साधनावच्छिन्नसाध्यव्यापकश्चेति । तत्राद्य उपदर्शितः । एवं क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका

१. साध्यनिष्ठव्याप्यतानिरूपितव्यापकतावत्त्वे सति हेत्वव्यापकत्वमुपाधेर्लक्षणम् ।

हिंसात्वात् क्रतुबाह्यहिंसावदित्यत्र निषिद्धत्वमुपाधिः। तस्य यत्राधर्मजनकत्वं तत्र निषिद्धत्वमिति साध्यव्यापकता। यत्र हिंसात्वं तत्र न निषिद्धत्वमिति निषिद्धत्वमुपाधिः। साधनाव्यापकः क्रतुहिंसायां निषिद्धत्वस्याभावात्। 'न हिंस्यात्सर्वाणि भूतानि' इति सामान्यवाक्यतः 'पशुना यजेत' इत्यादिविशेषवाक्यस्य बलीयस्त्वात्। अतो हिंसात्वं नाधर्मजनकत्वे प्रयोजकमपि तु निषिद्धत्वमेवेत्यादिकमपि द्रष्टव्यम्। द्वितीयो यथा—वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वमुपाधिः। तस्य यत्र प्रत्यक्षत्वं तत्रोद्भूतरूपवत्त्वमिति न केवलसाध्यव्यापकत्वं रूपे व्यभिचारात्, किन्तु द्रव्यत्वरूपो यः पक्षधर्मस्तदवच्छिन्नबहिःप्रत्यक्षत्वं यत्र तत्रोद्भूतरूपवत्त्वमिति पक्षधर्मावच्छिन्नसाध्यव्यापकत्वमेव। आत्मनि व्यभिचारवारणाय बहिःपदम्। यत्र प्रत्यक्षस्पर्शाश्रयत्वं तत्र नोद्भूतरूपवत्त्वमिति साधनाव्यापकत्वं च वायावुद्भूतरूपविरहात्। तृतीयो यथा—ध्वंसो विनाशी जन्यत्वादित्यत्र भावत्वमुपाधिः। तस्य यत्र विनाशित्वं तत्र भावत्वमिति न केवलसाध्यव्यापकत्वम् प्रागभावे भावत्वविरहात्, किन्तु जन्यत्वरूपसाधनावच्छिन्नविना-

शित्वं यत्र तत्र भावत्वमिति साधनावच्छिन्नसाध्यव्यापकत्व-मेव। यत्र जन्यत्वं तत्र न भावत्वमिति साधनाव्यापकत्वञ्च ध्वंसे भावत्वविरहात्, एवं स श्यामो मित्रातनयत्वादित्यत्र शाक-पाकजन्यत्वमुपाधिः। श्यामत्वस्य नीलघटेऽपि सत्त्वान्न केव-लसाध्यव्यापकत्वम्, किन्तु साधनावच्छिन्नसाध्यव्यापकत्वमेव। अष्टमे पुत्रे शाकपाकजन्यत्वविरहेण साधनाव्यापकत्वं चेत्यादि-कमपि द्रष्टव्यम्।

'व्याप्यत्वासिद्ध' हेतु वह कहलाता है, जो हेतु उपाधि से युक्त हो।

[ जैसे—'पर्वतो धूमवान्, वह्नेः' ( अर्थात् पर्वत अग्नियुक्त होने से धूमवाला है ) इस स्थल में वह्निरूप हेतु आर्द्रेन्धन ( गीली लकड़ी ) संयोगरूप उपाधि से युक्त है ]

'उपाधि' वह है, जो साध्यका 'व्यापक' होकर हेतुका 'अव्यापक' हो।

'साध्यव्यापक' वह कहलाता है, जो साध्य के अधि-करण में रहने वाले अत्यन्ताभाव का प्रतियोगी न हो।

जैसे—'पर्वतो धूमवान्, वह्नेः' इसी स्थल में साध्य

का अधिकरण जो पर्वत, उसमें रहने वाले अभाव जो घटाभाव-पटाभाव आदि हैं, उनका प्रतियोगी आर्द्रेन्धन-संयोग नहीं है। यतः 'यस्याऽभावः स प्रतियोगी' ऐसा सिद्धान्त है। तस्मात् आर्द्रेन्धनसंयोग साध्यव्यापक है।

'साधनाव्यापक' वह कहलाता है, जो हेतु के अधिकरण में रहने वाले अभाव का प्रतियोगी हो।

[ जैसे—'धूमवान् वह्नेः' इस स्थल में हेतु का अधिकरण जो अयोगोलक (आग से लाल लोहे का गोला) है, उसमें रहने वाले अभाव का प्रतियोगी आर्द्रेन्धनसंयोग भी है, क्योंकि अयोगोलक में आर्द्रेन्धनसंयोगाभाव स्वतः सिद्ध है। तस्माद् आर्द्रेन्धनसंयोग 'साधनाव्यापक' भी है। ]

एवञ्च 'पर्वतो धूमवान् वह्निमत्त्वात' इस स्थलमें आर्द्रेन्धनसंयोगरूप उपाधि हुई। क्योंकि जहाँ ( पर्वत में ) धूम है, वहाँ, आर्द्रेन्धनसंयोग है, इसलिये उसमें साध्यव्यापकता और जहाँ (अयोगोलक में) आग है, वहाँ आर्द्रेन्धनसंयोग नहीं है, इसलिये साधनाव्यापकता भी सिद्ध है।

तस्मात् उक्तलक्षण में—साध्यव्यापक और साधनाव्या-

पक होने से आर्द्रेन्धनसंयोग उपाधि है, ऐसा सिद्ध हुआ। एवञ्च इस ( आर्द्रेन्धनसंयोग ) उपाधि से युक्त धूमसाध्यक वह्निहेतुक स्थल में—वह्निव्याप्यत्वासिद्ध है। तस्मात् उपाधियुक्तव्याप्यत्वासिद्ध हेत्वाभास का उदाहरण—'पर्वतो धूमवान् वह्नेः' इस स्थल में 'वह्नि' को समझना चाहिये। इसी तरह—'क्रत्वन्तर्वर्तिनी हिंसा अधर्मजनिका, हिंसात्वात्, क्रतुबाह्यहिंसावत्' ( अर्थात् यज्ञ में होने वाली हिंसा अधर्मजनक है, क्योंकि उसमें भी यज्ञातिरिक्त हिंसा की तरह हिंसात्व है ) इस स्थल में निषिद्धत्व रूप उपाधि है।

बाधितस्य किं लक्षणम् ?

[१]यस्य साध्याभावः प्रमाणान्तरेण निश्चितः स बाधितः। यथा वह्निरनुष्णो द्रव्यत्वादिति। अत्रानुष्णत्वं साध्यं, तदभाव उष्णत्वं स्पार्शनप्रत्यक्षेण गृह्यते इति बाधितत्वम्।

यस्येति। सद्धेतुवारणाय प्रमाणान्तरेणेति। घटादिवारणाय साध्येति।

इति पदकृत्यकेऽनुमानखण्डः ॥

---

१. प्रत्यक्षादिप्रमाणान्तरनिर्णीतसाध्यप्रतियोगिकाभाववत्त्वे सति हेतुत्वं बाधितस्य लक्षणम्।

'बाधित रूप' हेतु वह कहलाता है, जिस हेतु का साध्याभाव प्रमाणान्तर से पक्ष में सिद्ध हो । यथा—'वह्निः अनुष्णः द्रव्यत्वात्' ( अर्थात् आग ठण्डी है, क्योंकि उसमें द्रव्यत्व रहता है ) । इस स्थल में जो अनुष्णत्व (ठण्डापन) है, उसका अभाव जो उष्णत्व ( गरमी ) है, वह प्रत्यक्ष प्रमाण से आग में सिद्ध है । ( तस्मात् इस स्थल में द्रव्यत्वरूप हेतु बाधित हेत्वाभास का उदाहरण है ) ।

इत्यनुमानपरिच्छेदः ।

---

## अथोपमानखण्डम्

उपमितिकरणमुपमानम्[१] । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथाहि—कश्चिद्गवयपदार्थमजानन् कुतश्चिदारण्यकपुरुषात् 'गोसदृशो गवयः' इति श्रुत्वा वनं गतो वाक्यार्थं स्मरन् गोसदृशं

---

१. उपमितिनिष्ठनिरूपकतानिरूपितनिरूप्यतावत्त्वे सति व्यापारवत्साधारणत्वमुपमानस्य लक्षणम् ।

पिण्डं पश्यति, तदनन्तरमसौ गवयशब्दवाच्य इत्युपमितिरुत्पद्यते।

अवसरसङ्गतिमभिप्रेत्यानुमानानन्तरमुपमानं निरूपयति—उपमितीति। उपमितेः करणमुपमानमित्यर्थः। कुठारादिवारणाय मितीति। प्रत्यक्षादिवारणाय उपेति। संज्ञासंज्ञीति। अनुमित्यादिवारणाय सम्बन्धेति। संयोगादिवारणाय संज्ञासंज्ञीति। असौ गवयशब्दवाच्य इति। अभिप्रेतो गवयो गवयपदवाच्य इत्यर्थः। तेन गवयान्तरे शक्तिग्रहाभावप्रसङ्ग इति दूषणमपास्तम्। यथा च गोसादृश्यविशिष्टपिण्डज्ञानं करणम्। अतिदेशवाक्यार्थस्मरणमवान्तरव्यापारः। उपमितिः फलमिति सारम्। तच्चोपमानं त्रिविधं-सादृश्यविशिष्टपिण्डज्ञानमसाधारणधर्मविशिष्टपिण्डज्ञानं वैधर्म्यविशिष्टपिण्डज्ञानं च। चैत्राद्यमुक्तमेव। द्वितीयं यथा खड्गमृगः कीदृगिति पृष्टे नासिकालसदेकशृङ्गोऽनतिक्रान्तगजाकृतिश्चेति तज्ज्ञातृभ्यः श्रुत्वा कालान्तरे तादृशं पिण्डं पश्यन्नतिदेशवाक्यार्थं स्मरति तदनन्तरं खड्गमृगः खड्गपदवाच्य इत्युपमितिरुत्पद्यते। अत्र नासिकालसदेकशृङ्ग [illegible]

धर्मः। तृतीयं यथा-उष्ट्रः कीदृगिति पृष्टे अश्वादिवन्न समानपृष्ठो न ह्रस्वग्रीवशरीरश्चेति आप्तोक्ते कालान्तरे तत्पिण्डज्ञानं ततोऽतिदेशवाक्यार्थस्मरणं तत उष्ट्र उष्ट्रपदवाच्य इत्युपमितिरुत्पद्यते। इति पदकृत्यके उपमानखण्डः॥

अब 'उपमान' का निरूपण करते हैं—

'उपमितिकरणमुपमानम्' अर्थात् उपमिति का करण (असाधारण कारण) 'उपमान' है। एवं 'संज्ञा-संज्ञी' अर्थात् पद और अर्थ इन दोनों का जो शक्तिरूप सम्बन्ध है, उसके ज्ञान उपमिति है और इस उपमिति का करण सादृश्यज्ञान है। (तस्मात् सादृश्यज्ञान ही उपमान कहलाता)। यथा—कोई ग्रामीण (दिहाती) मनुष्य, जो कि 'गवय' शब्द का अर्थ जानता न था, किसी जङ्गली पुरुष के मुख से 'गोसदृशो गवयः' अर्थात् गवय गाय की तरह एक जङ्गली जानवर होता है, यह सुन कर किसी कार्यवश जङ्गल में गया और वहां जाकर उक्त 'गोसदृशो गवयः' इस वाक्यार्थ को स्मरण करते हुए गाय के समान किसी जन्तु को देखा, तब यह (जन्तु) 'गवय' शब्दवाच्य है, यह उपमिति उसे होती है। इत्युपमानपरिच्छेदः।

# अथ शब्दखण्डम्

शब्दप्रमाणस्य किं स्वरूपम् ?

आप्तवाक्यं शब्दः[1] । आप्तस्तु[2]यथार्थवक्ता । वाक्यं पदसमूहः, यथा गामानयेति । शक्तं पदम् । [3]अस्मात् पदादयमर्थो बोद्धव्य इतीश्वरसङ्केतः [4]शक्तिः ।

अवसरसङ्गतिमभिप्रेत्योपमानानन्तरं शब्दं निरूपयति—आप्तेति । शब्द इति । शब्दप्रमाणमित्यर्थः । भ्रान्तविप्रलम्भकयोर्वाक्यस्य शब्दप्रमाणत्ववारणाय आप्तेति । ननु कोऽयमाप्त इत्यत आह—आप्तस्त्विति । यथार्थवक्ता यथाभूतावाधितार्थोपदेष्टा । वाक्यं लक्षयति—वाक्यमिति । घटादिसमूहवारणाय पदेति । शक्तमिति । निरूपकतासम्बन्धेन शक्तिविशिष्टमित्यर्थः । अस्मादिति । घटपदाद्घटरूपोऽर्थो बोद्धव्य

---

१. आप्तोच्चरितत्वे सति वाक्यत्वं शब्दस्य लक्षणम् । २. प्रयोगहेतुभूतयथार्थज्ञानवत्त्वमाप्तत्वम् ।

३. पदनिष्ठप्रतियोगितानिरूपकत्वविशिष्टार्थनिष्ठानुयोगितानिरूपकसम्बन्धत्वं वृत्तित्वम् । ४. स्वीयतत्पदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वं शक्तित्वम् । तात्पर्यानुपपत्तिनिष्ठजनकतानिरूपितजन्यतावत्त्वे सति शक्यसम्बन्धत्वं लक्षणात्वम् । तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यसामान्यलक्षणम् ।

इतीश्वरेच्छैव शक्तिरित्यर्थः । अर्थस्मृत्यनुकूलपदार्थसम्बन्धत्वं तल्लक्षणम् । शक्तिरिव लक्षणापि पदवृत्तिः । अथ केयं लक्षणा ? शक्यसम्बन्धो लक्षणा । सा च त्रिधा–जहत्–अजहत्–जहदजहद्भेदात् । वर्तते च गङ्गायां घोष इत्यत्र गङ्गापदशक्य-प्रवाहसम्बन्धस्तीरे । लक्षणाबीजं च तात्पर्यानुपपत्तिः । अत एव प्रवाहे घोषतात्पर्यानुपपत्तेस्तीरे लक्षणा सेत्स्यति । छत्रिणो यान्तीत्यादौ द्वितीया । सोऽयमश्व इत्यादौ तृतीया ।

यथार्थ ( सत्य ) बोलने वाले मनुष्य आप्त हैं, और उन्हीं आप्तपुरुषों का वाक्य शब्द नामक प्रमाण है । पदों के समूह ( एकत्रित ) को वाक्य कहते हैं । जैसे— 'गामानय' ( गाय को लाओ ) इत्यादि वाक्य कहलाता है । जिसमें शक्ति हो वह पद कहलाता है और 'इस पद से यह अर्थ समझना चाहिये' यह जो ईश्वर का संकेत ( इच्छा ) है, उसी का नाम शक्ति है ।

वाक्यार्थज्ञाने हेतवः के ?

आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने[1] हेतुः ।

---

१. आकाङ्क्षायोग्यतासान्निध्यादिनिष्ठजनकतानिरूपित-जन्यतावत्त्वं वाक्यार्थज्ञानत्वम् ।

पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा[1]। अर्थाबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः[2]। तथा च आकाङ्क्षादिरहितं वाक्यमप्रमाणम्। यथा गौरश्वः पुरुषो हस्तीति न प्रमाणम्, आकांक्षाविरहात्। वह्निना सिञ्चतीति न प्रमाणम्, योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि गामानयेत्यादिपदानि न प्रमाणं, सान्निध्याभावात्।

असम्भववारणाय पदान्तरव्यतिरेकप्रयुक्तेति। पुनरसम्भववारणाय पदान्तरेति। अर्थेति। आकाङ्क्षावारणाय अर्थेति। पदानामिति। असहोच्चारितेष्वतिव्याप्तिवारणाय अविलम्बेनेति। आकाङ्क्षावारणाय पदानामिति। आकाङ्क्षादिशून्यवाक्यस्यात्र प्रमाणत्वं निषेधयति—तथा चेति

---

१. अव्यवहितोत्तरत्वादिसम्बन्धावच्छिन्नयत्पदनिष्ठयत्पदप्रकारकज्ञानाभावप्रयुक्तो यादृशशाब्दबोधविरहस्तादृशशाब्दबोधे तत्पदनिष्ठतत्पदवत्त्वमाकांक्षालक्षणम्। २. एकपदार्थनिष्ठानुयोगितानिरूपकत्वे सत्यपरपदार्थनिष्ठप्रतियोगिताशालित्वं योग्यतालक्षणम्। बाधाभावो वा। ३. अविलम्बोच्चारितत्वम्पदानां सन्निधिलक्षणम्।

आकाङ्क्षादिकं शब्दहेतुरित्युक्ते चेत्यर्थः। अनाकाङ्क्षाद्युदाहरणं दर्शयति— यथेति।

वाक्यार्थज्ञान ( शाब्दबोध ) में तीन प्रकार के हेतु हैं—आकाङ्क्षा, योग्यता और सन्निधि।

जिस पद में 'पदान्तरव्यतिरेकप्रयुक्त' ( किसी दूसरे पद के अभावप्रयुक्त ) जो 'अन्वयाननुभावकत्व' अर्थात् शाब्दबोधाजनकता है, वही 'आकाङ्क्षा' है। जैसे—'गामानय' इस वाक्य में जो 'गो' पद है उसका शाब्दबोध 'अम्' पद के बिना नहीं होता, क्योंकि 'गो आनय' इस वाक्य से अर्थप्रतीत होता ही नहीं है। तस्मात् 'गामानय' इस वाक्य के अर्थज्ञान ( शाब्दबोध ) में गो-पदोत्तर अम्पदस्वरूप आकाङ्क्षा हेतु है।

'अर्थाबाध' ( बाधाभाव ) योग्यता है। जैसे—'वह्निना सिञ्चति' ( आग से सींचता है )। यहाँ सिंचन करने की योग्यता आग में बाधित है, अतः इस वाक्य से शाब्दबोध नहीं होता, तस्मात् एक पदार्थ में दूसरे पदार्थ का सम्बन्ध रहना ही योग्यता है।

पदों को अविलम्ब ( शीघ्रता से ) उच्चारण करना ही 'सन्निधि' है।

एवञ्च—आकाङ्क्षा-योग्यता और सन्निधि से रहित जो वाक्य है, वह प्रमाण नहीं होता। जैसे—'गाय, घोड़ा, पुरुष, हाथी' यह वाक्य प्रमाण नहीं होता। क्योंकि इस वाक्य में पूर्वोक्त आकांक्षा नहीं है, और 'आग से सींचो' यह वाक्य भी प्रमाण नहीं है, क्योंकि इसमें पूर्वोक्त योग्यता नहीं है। एवं एक-एक पहर के बाद (पहले—'गाम्' तदुत्तर एक पहरके बाद—'आनय' ऐसा) उच्चारण किये गये 'गाम् आनय' इत्यादि पद भी प्रमाण नहीं है, क्योंकि इसमें सन्निधि नहीं है।

वाक्यं कतिविधम् ?

वाक्यं द्विविधम्—वैदिकं लौकिकञ्च। वैदिकमीश्वरोक्तत्वात् सर्वमेव प्रमाणम्। लौकिकं त्वाप्तोक्तं प्रमाणम्। अन्यदप्रमाणम्।

वाक्य (अर्थबोधक पदसमूह) दो प्रकार का है—वैदिक और लौकिक। वैदिक (वेद, स्मृति, पुराण आदि से उक्त) वाक्य ईश्वर के वाक्य हैं, अतः वे सभी वैदिक वाक्य प्रमाण हैं। लौकिक (मनुष्य से उक्त) वाक्य तो वे ही प्रमाण हैं, जो यथार्थवक्ता से उच्चरित हों, उनसे अन्य (मिथ्यावादियों से युक्त) लौकिक वाक्य प्रमाण नहीं हैं।

शाब्दज्ञानं किम् ?

वाक्यार्थज्ञानं[1] शाब्दज्ञानम्। तत्करणं तु शब्दः।

नन्वेतावता शाब्दसामग्री प्रपञ्चिता, प्रमाविभाजकवाक्ये शाब्दस्याप्युद्दिष्टत्वेन तत्कुतो न प्रदर्शितमित्यत आह—वाक्यार्थेति। शाब्दत्वं च शब्दात्प्रत्येमीत्यनुभवसिद्धा जातिः। शाब्दबोधक्रमो यथा—चैत्रो ग्रामं गच्छतीत्यत्र ग्रामकर्मकगमनानुकूलवर्तमानकृतिमांश्चैत्र इति शाब्दबोधः। द्वितीयायाः कर्मत्वमर्थः। धातोर्गमनम्। अनुकूलत्वं च संसर्गमर्यादया भासते। लटो वर्तमानत्वमाख्यातस्य कृतिः। तत्सम्बन्धः संसर्गमर्यादया भासते। रथो गच्छतीत्यत्र गमनानुकूलव्यापारवान् रथ इति शाब्दबोधः। स्नात्वा गच्छतीत्यत्र गमनप्रागभावावच्छिन्नकालीनस्नानकर्ता गमनानुकूलवर्तमानकृतिमानिति शाब्दबोधः। क्त्वाप्रत्ययस्य कर्ता पूर्वकालीनत्वं चार्थः। एवमन्यत्रापि वाक्यार्थो बोध्यः।

इति पदकृत्ये शब्दपरिच्छेदः॥

---

१. वृत्त्या पदजन्यपदार्थस्मृतित्वावच्छिन्नकारणतानिरूपितकार्यताशालित्वं वाक्यार्थज्ञानस्य (शाब्दबोधस्य) लक्षणम्।

वाक्य के अर्थ को समझना ही शाब्दज्ञान है। उस शाब्दज्ञान ( शाब्दबोध ) का कारण ( असाधारण कारण ) शब्द है। तस्मात् शब्द ही शब्दप्रमाण है।

इति शब्दपरिच्छेदः।

## अथाऽवशिष्टगुणनिरूपणम्

अयथार्थानुभवस्य कति भेदाः ?

अयथार्थानुभवस्त्रिविधः–संशयविपर्ययतर्कभेदात्।

अयथार्थानुभवं विभजते—अयथार्थेति।

संशय, विपर्यय और तर्क के भेद से 'अयथार्थ अनुभव' तीन प्रकारका है।

संशयस्य किं लक्षणम् ?

एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्ट्यावगाहिज्ञानं संशयः[1]। यथा स्थाणुर्वा पुरुषो वेति।

संशयं लक्षयति—एकस्मिन्निति। एकस्मिन्धर्मिणि एकस्मिन्नेव पुरोवर्तिनि पदार्थे विरुद्धा व्यधिकरणा ये नानाधर्माः स्थाणुत्वपुरुषत्वादयस्तेषां वैशिष्ट्यं सम्बन्धः तदवगाहि ज्ञानं

---

१. एकधर्मावच्छिन्नविशेष्यतानिरूपितभावाभावप्रकारज्ञानत्वं संशयलक्षणम्।

संशय इत्यर्थः। घटपटाविति समूहालम्बनज्ञानस्य घटत्वपटत्वरूपविरुद्धनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसक्तिवारणाय एकस्मिन्निति। घटः पृथिवीति ज्ञानस्यैकस्मिन्धर्मिणि घटे घटत्वपृथिवीत्वरूपनानाधर्मवैशिष्ट्यावगाहित्वादतिप्रसङ्गवारणाय विरुद्धेति। पटत्वविरुद्धघटवान् पट इति ज्ञानेऽतिप्रसक्तिवारणाय नानेति।

एक विशेष्य में परस्पर विरुद्ध नाना धर्म का जो सम्बन्ध है, उसका जो ज्ञान, वही 'संशय' है यथा—किसी एक 'विशेष्य' स्थाणु ( सूखा हुआ मुण्डा वृक्ष ) को देखकर उसमें संदेह होता है कि—यह 'स्थाणु' है अथवा 'पुरुष' है। यहाँ एक ही स्थाणुरूप विशेष्य में स्थाणुत्व-स्थाणुत्वाभाव तथा पुरुषत्व–पुरुषत्वाभाव रूप विरुद्ध धर्म का अवगाहन ज्ञान में है, अतः यह संशयज्ञान हुआ।

विपर्ययः कः ?

मिथ्याज्ञानं विपर्ययः[1]। यथा शुक्तौ 'रजतम्' इति।

मिथ्येति। यथार्थज्ञानवारणाय मिथ्येति। अयथार्थवारणाय ज्ञानेति।

१. तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालित्वे सति तद्भिन्ननिश्चयत्वं विपर्ययस्य लक्षणम्।

मिथ्याज्ञान 'विपर्यय' कहलाता है—'सीप में यह चाँदी है' ऐसा ज्ञान ।

तर्कस्य किं स्वरूपम् ?

व्याप्यारोपेण व्यापकारोपस्तर्कः[1] यथा यदि वह्निर्न स्यात्तर्हि धूमोऽपि न स्यादिति ।

तर्कं लक्षयति— व्याप्यारोपेणेति । असम्भववारणाय व्याप्यारोपेणेति । पुनरसम्भववारणाय व्यापकारोप इति । अत्र वह्न्यभावो व्याप्यः धूमाभावो व्यापकः । यद्यपि तर्कस्य विपर्ययात्मकत्वेन पृथग्विभागोऽनुचितः, तथापि प्रमाणानुग्राहकत्वात् स उदित इति बोध्यम् । स्वप्नस्तु पुरीतद्बहिर्देशान्तर्देशयोः सन्धौ इडानाड्यां वा मनसि स्थितेऽदृष्टविशेषेण धातुदोषेण वा जन्यते । स मानसविपर्ययान्तर्गतः ।

व्याप्य के आरोप ( मिथ्याज्ञान ) से व्यापक का आरोप ( मिथ्याज्ञान ) करना 'तर्क' कहलाता है । जैसे—'यदि आग न हो तो धूम भी न हो' । यहाँ पर वह्न्यभावरूप व्याप्य के आरोप ( मिथ्याज्ञान ) से धूमाभावरूपव्यापक का आरोप ( मिथ्याज्ञान ) होता है, अतः यह तर्क है ।

---

१. व्याप्यविषयकाहार्यज्ञाननिष्ठजनकतानिरूपितजन्यताशालि—
[illegible] तर्कस्य लक्षणम् ।

स्मृतिः कतिविधा ?

स्मृतिरपि द्विविधा—यथार्था अयथार्था च। प्रमाजन्या यथार्था, अप्रमाजन्या अयथार्था।

स्मृति दो प्रकार की होती है—यथार्थ और अयथार्थ। जो स्मृति यथार्थज्ञान से उत्पन्न हो वह यथार्थ और जो अयथार्थज्ञान से हो वह अयथार्थ स्मृति कहलाती है।

सुखस्य किं लक्षणम् ?

सर्वेषामनुकूलवेदनीयं सुखम्[1]।

सुखं निरूपयति—सर्वेषामिति। सर्वात्मनामनुकूलमिति वेद्यं यत्तत्सुखमित्यर्थः।

अहं सुखीत्यनुभवसिद्धसुखत्वजातिमत्, धर्ममात्रासाधारणकारणो गुणो वा सुखम्। शत्रुदुःखवारणाय सर्वेषामिति।

'सुख' वह है जो 'सर्वेषाम्' अर्थात् इष्ट, मित्र, शत्रु आदि सभी का प्रियजनक हो।

दुःखस्य किं लक्षणम् ?

प्रतिकूलवेदनीयं दुःखम्[2]।

---

१. इष्टसाधनताज्ञानानधीनेच्छाविषयत्वं सुखस्य लक्षणम्।

२. इतरद्वेषानधीनद्वेषविषयताशालित्वं दुःखस्य लक्षणम्॥

प्रतिकूलेति। दुःखत्वजातिमत्, अधर्ममात्रासाधारणकारणो गुणो वा दुःखम्। पदकृत्यं पूर्ववत्।

'दुःख' वह है—जो सभी इष्ट, मित्र आदि का अप्रियजनक हो।

इच्छाद्वेषप्रयत्नानां कानि लक्षणानि ?

इच्छा[1]कामः। क्रोधो द्वेषः[2]। कृतिः प्रयत्नः[3]।

इच्छां निरूपयति—इच्छेति। काम इति पर्यायः। इच्छात्वजातिमती इच्छा। सा द्विविधा-फलेच्छा उपायेच्छा च। फलं सुखादिकम्। उपायो यागादिः। द्वेषं निरूपयति—क्रोध इति। द्वेष्मीत्यनुभवसिद्धद्वेषत्वजातिमान् द्विष्टसाधनताज्ञानजन्यगुणो वा द्वेषः। प्रयत्नं निरूपयति—कृतिरिति। प्रयत्नत्वजातिमान्प्रयत्नः। स त्रिविधः-प्रवृत्तिनिवृत्तिजीवनयोनिभेदात्। इच्छाजन्यो गुणः प्रवृत्तिः। द्वेषजन्यो गुणो निवृत्तिः। जीवनादृष्टजन्यो गुणो जीवनयोनिः। स च प्राणसञ्चारकारणम्।

कामना का नाम इच्छा है। क्रोध का नाम द्वेष है, कृति का नाम यत्न (उद्योग) है।

---

१. प्रवृत्तिसाक्षादनुकूलत्वमिच्छाया लक्षणम्। २. साक्षादनुकूलताभावशालित्वं द्वेषस्य लक्षणम्। ३. कृतित्वजातिमत्त्वं प्रयत्नस्य लक्षणम्।

धर्मस्य अधर्मस्य च किं लक्षणम् ?

विहितकर्मजन्यो धर्मः[१] । निषिद्धकर्मजन्यस्त्वधर्मः[२] ।

धर्ममाह—विहितेति । वेदविहितेत्यर्थः । अधर्मवारणाय वेदविहितेति । यागादिक्रियावारणाय कर्मजन्य इति । स च कर्मनाशाजलस्पर्शकीर्तनभोगतत्त्वज्ञानादिना नश्यति । अधर्मलक्षणमाह—निषिद्धेति । वेदनेत्यर्थः । धर्मवारणाय वेदनिषिद्धेति । वेदनिषिद्धक्रियावारणाय कर्मजन्य इति । स च भोगप्रायश्चित्तादिना नश्यति । एतावेव अदृष्टमिति कथ्येते वासनाजन्यौ च । वासना च विलक्षणसंस्कारः ।

वेदादि धर्मग्रन्थोक्तविधि से विहित जो कर्म हैं उनसे उत्पन्न अदृष्ट को 'धर्म' कहते हैं, और वेदादि प्रतिपदोक्त निषिद्ध कर्म से उत्पन्न अदृष्ट को 'अधर्म' कहते हैं ।

आत्ममात्रविशेषगुणाः के ?

बुद्ध्यादयोऽष्टावात्ममात्रविशेषगुणाः बुद्धीच्छाप्रयत्ना नित्या अनित्याश्च । नित्या ईश्वरस्य, अनित्या जीवस्य ।

---

१. वेदादिनिष्ठप्रतिपादकतानिरूपितप्रतिपाद्यतावत्कर्मजन्यत्वं धर्मस्य लक्षणम् । २. वेदादिनिष्ठनिषेधकतानिरूपितनिषेध्यतावत्कर्मजन्यत्वमधर्मस्य लक्षणम् ।

आत्मा के विशेष गुण आठ हैं—बुद्धि, सुख, दुःख, इच्छा, द्वेष, प्रयत्न, धर्म और अधर्म। इनमें बुद्धि, इच्छा और प्रयत्न ये तीनों दो दो प्रकार के हैं–नित्य और अनित्य। ईश्वर की बुद्धि, इच्छा तथा प्रयत्न नित्य हैं और जीव की बुद्धि, इच्छा तथा प्रयत्न अनित्य हैं।

संस्कारः कतिविधः, तद्भेदाश्च किंस्वरूपाः ?

[1]संस्कारस्त्रिविधः—वेगो[2] भावना[3] स्थितिस्थापकश्चेति[4]। वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः। अनुभवजन्या स्मृतिहेतुर्भावना, आत्ममात्रवृत्तिः। अन्यथाकृतस्य पुनस्तदवस्थापादकः स्थितिस्थापकः, कटादिपृथिवीवृत्तिः इति गुणाः ॥

संस्कारं विभजते—संस्कार इति। सामान्यगुणात्मविशेषगुणोभयवृत्तिगुणत्वव्याप्यजातिमान् संस्कारः। घटादिवार-

१. आत्मविशेषगुणवृत्तिमूर्तवृत्तिगुणत्वनिष्ठव्यापकतानिरूपितव्याप्यतावज्जातिमत्त्वं संस्कारस्य लक्षणम्। २. क्रियानिष्ठजन्यतानिरूपितजनकतावत्त्वे सति क्रियानिष्ठजनकतानिरूपितजन्यताशालित्वं वेगस्य लक्षणम्। ३. अनुभवजन्यत्वे सति स्मृतिहेतुत्वं भावनाया लक्षणम्। ४. अन्यथाकृतस्य पुनस्तदवस्थापादकत्वं स्थितिस्थापकलक्षणम्।

णाय गुणत्वव्याप्येति। संयोगादिवारणाय आत्मविशेषगुणोभयवृत्तीति। ज्ञानादिवारणाय सामान्येति। द्वितीयादिपतनासमवायिकारणं वेगः। रूपादिवारणाय द्वितीयादिपतनेति। कालादिवारणाय असमवायेति। भावनां लक्षयति—अनुभवेति। आत्मादिवारणाय प्रथमदलम्। अनुभवध्वंसवारणाय द्वितीयदलम्। स्थितिस्थापकमाह—अन्यथेति। पृथिवीमात्रसमवेतसंस्कारत्वव्याप्यजातिमत्वं स्थितिस्थापकत्वम्। गन्धत्वमादाय गन्धेऽतिव्याप्तिवारणाय संस्कारत्वव्याप्येति। भावनात्वमादाय भावनावारणाय पृथिवीसमवेतेति। स्थितिस्थापकरूपान्यतरत्वमादाय रूपवारणाय जातीति।

इति गुणा इति। द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः। द्रव्यकर्मणोरतिव्याप्तिवारणाय विशेषणदलम्। सामान्यादावतिव्याप्तिवारणाय विशेष्यदलम्। इति गुणाः।

संस्कार तीन प्रकार के हैं—वेग, भावना और स्थितिस्थापक। इनमें 'वेग' रूप संस्कार पृथिवी, जल, तेज, वायु और मन इन पाँचों में है। द्वितीय—'भावना' रूप संस्कार वह है, जो अनुभव से उत्पन्न और स्मरण का कारण हो। यह भावना केवल आत्मा में ही रहती है। तृतीय—'स्थितिस्थापक' रूप संस्कार वह है, जिस संस्कार से दूसरी

अवस्था में गयी हुई वस्तु, पुनः अपनी अवस्था में आ जाय । यह संस्कार चटाई आदि पार्थिव पदार्थों में रहता है।

[ जैसे-चटाई को लपेट देने से वह चटाई काम में नहीं आती और विस्तृत कर देने से वह अपनी अवस्था में आकर काम में आ जाती है । ]

इत्यवशिष्टगुणनिरूपणम् ।

---

## अथ कर्मादिलक्षणप्रकरणम्

कर्मणः किं लक्षणम् ?

चलनात्मकं कर्म[1] । ऊर्ध्वदेशसंयोगहेतुरुत्क्षेपणम् । अधोदेशसंयोगहेतुरपक्षेपणम् । शरीरस्य सन्निकृष्ट-संयोगहेतुराकुञ्चनम् । विप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ।

चलनेति । संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म । हस्तपुस्तकसंयोगवारणाय सत्यन्तम् । घटादिवारणाय विशेष्यदलम् । ऊर्ध्वेति । अपक्षेपणवारणाय ऊर्ध्वेति । कालादिवारणाय असाधारणेत्यपि बोध्यम् । अधोदेशेति । उत्क्षेपणवारणाय अधोदेशेति । कालादिवारणाय असाधारणेत्यपि

---

१. संयोगभिन्नत्वे सति संयोगासमवायिकारणत्वं कर्मलक्षणम् ।

देयम् । शरीरेति । प्रसारणादिवारणाय सन्निकृष्टेति । कालादिवारणाय असाधारणपदमप्यावश्यकम् ।

चलने फिरने आदि क्रिया का नाम 'कर्म' है । ऊर्ध्वदेश ( ऊपर भाग ) में संयोग होने का कारण 'उत्क्षेपण' ( ऊपर फेकना ) है, और 'अधोदेश' ( नीचे भाग ) में संयोग होने का कारण 'अपक्षेपण' ( नीचे फेकना ) है । एवं शरीर के समीप संयोग का कारण 'आकुञ्चन' (समेटना) है, तथा शरीर से दूर संयोग का कारण प्रसारण ( फैलाना ) है इनसे भिन्न सभी कर्म गमन ( जाना ) कहलाता है ।

सामान्यस्य किं लक्षणम् ?

नित्यमेकमनेकानुगतं सामान्यम्[1] । द्रव्यगुणकर्मवृत्ति । तद् द्विविधम्—परापरभेदात् परं सत्ता, अपरं द्रव्यत्वादि ।

नित्यमिति । संयोगादिवारणाय नित्यमिति । कालादिपरिमाणवारणाय अनेकेति । अनेकानुगतत्वं च समवायेन बोध्यम्, तेन नात्यन्ताभावेऽतिव्याप्तिः ।

'सामान्य' वह है जो नित्य और एक होने पर भी

१. नित्यत्वे सति अनेकसमवेतत्वं सामान्यस्य (जातेः) लक्षणम् ।

नाना पदार्थों में रहे। सामान्य (जाति) द्रव्य, गुण और कर्म में रहता है।

सबसे अधिक देश में व्यापक होकर रहने वाली जाति सत्ता है। द्रव्यत्व आदि जाति सत्ता से कम देश में रहती है इसलिये व्याप्य है।

विशेषाणां किं लक्षणम् ?

नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः[1]।

नित्यद्रव्यवृत्तय इति। घटत्वादिवारणाय नित्यद्रव्यवृत्तय इति। आत्मत्वमनस्त्ववारणाय आत्मत्वमनस्त्वभिन्ना इत्यपि बोध्यम्।

'विशेष' वे हैं जो नित्य द्रव्यों में रहते हुए दूसरों को व्यावृत्त करें।

समवायस्य किं लक्षणम् ?

नित्यसम्बन्धः समवायः। अयुतसिद्धवृत्तिः। ययोर्द्वयोर्मध्ये एकमविनश्यदपराश्रितमेवावतिष्ठते तावयुतसिद्धौ। यथा अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिव्यक्ती विशेषनित्यद्रव्ये चेति।

---

१. नित्यद्रव्यवृत्तित्वविशिष्टत्वे सति स्वतो व्यावर्त्तकत्वं विशेषलक्षणम्। २. नित्यत्वे सति विशिष्टबुद्धिनियामकत्वे सति सम्बन्धिप्रतियोग्यनुयोगिभिन्नत्वं समवायस्य लक्षणम्।

नित्येति। आकाशादिवारणाय सम्बन्ध इति। संयोगवारणाय नित्येति। स्वरूपसम्बन्धवारणाय तद्भिन्न इत्यपि बोध्यम्।

नित्य सम्बन्ध का नाम 'समवाय' है। यह समवायसम्बन्ध अयुतसिद्ध पदार्थों में रहता है। जिन दो में एक पदार्थ, जबतक वह नष्ट न हो जाय तब तक परस्पर एक दूसरे के बिना न रह सके, वे ही दोनों अयुतसिद्ध हैं। जैसे—अवयव और अवयवी, गुण और द्रव्य, क्रिया और द्रव्य, जाति और व्यक्ति, नित्यद्रव्य और विशेष।

प्रागभावस्य किं लक्षणम्?

अनादिः सान्तः प्रागभावः[1], उत्पत्तेः पूर्वं कार्यस्य।

'प्रागभावं लक्षयति—अनादिरिति। घटादिवारणाय प्रथमदलम्। परमाणुवारणाय द्वितीयदलम्। पुनः प्रागभावः कस्मिन्कालेऽस्तीत्यत आह—उत्पत्तेरिति। कार्यस्योत्पत्तेः प्राक् स्वप्रतियोगिसमवायिकारणे वर्तते इत्यर्थः।

'प्रागभाव' वह कहलाता है, जिस अभाव की उत्पत्ति नहीं होती हो पर अन्त में (नाश) होता हो, जैसे-घटादि कार्यों की उत्पत्ति के पहिले जो उनका अभाव है वह

१ उत्पत्तिविशिष्टकाले सति स्वप्रतियोगित्वम्प्रागभावस्य लक्षणम्।

प्रागभाव' है क्योंकि इसकी उत्पत्ति नहीं होती, किन्तु घटादिकार्योत्पत्ति के बाद उनका नाश हो जाता है।

प्रध्वंसाभावस्य किं लक्षणम् ?

सादिरनन्तः प्रध्वंसः[1] उत्पत्त्यनन्तरं कार्यस्य।

ध्वंसं लक्षयति—सादिरिति। घटादिवारणाय अनन्त इति। आत्मादिवारणाय सादिरिति। उत्पत्तिति। कार्यस्योत्पत्त्यनन्तरं स्वप्रतियोगिसमवायिकारणवृत्तिरित्यर्थः। स च ध्वस्तः, इति प्रत्ययविषयः।

'प्रध्वंसाभाव' वह कहलाता है जिस अभाव का आदि ( उत्पत्ति ) हो लेकिन अन्त ( ध्वंस ) नहीं होता हो। जैसे—घटादि कार्यों की उत्पत्ति के पश्चात् जो अभाव है वह उत्पन्न होता है, किन्तु इसका अन्त नहीं होता।

अत्यन्ताभावस्य किं लक्षणम् ?

त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः[2]। यथा भूतले घटो नास्तीति।

---

१. उत्पत्तिविशिष्टत्वे सति विनाशप्रतियोगित्वं ध्वंसलक्षणम्।

२. प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वे सति अन्योन्याभावभिन्नत्वे सति अभावत्वम् अत्यन्ताभावलक्षणम्।

अत्यन्ताभावं च लक्षयति—त्रैकालिकेति। त्रैकालिकत्वे सति संसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभावः। ध्वंसप्रागभाववारणाय त्रैकालिकेति। भेदवारणाय संसर्गेत्यादि।

'अत्यन्ताभाव' वह कहलाता है जिस अभाव की प्रतियोगिता संसर्ग से अवच्छिन्न (युक्त) हो तथा जो भूत, भविष्य और वर्तमान—इन तीनों कालों में रहता हो। जैसे—'भूतले घटो नास्ति' (पृथिवी पर घड़ा नहीं है), इस तरह का अभाव।

अन्योन्याभावस्य किं लक्षणम्?

तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽन्योन्याभावः[1]। यथा घटः पटो नेति।

अन्योन्याभावं लक्षयति—तादात्म्येति। प्रागभावप्रध्वंसाभाववारणाय तादात्म्येति। अत्यन्ताभाववारणाय तादात्म्यत्वेन सम्बन्धो विशेषणीयः।

'अन्योन्याभाव' वह कहलाता है जिसकी प्रतियोगिता तादात्म्यसम्बन्ध से अवच्छिन्न (युक्त) हो। जैसे—'घटो न पटः' (घड़ा कपड़ा नहीं है) इस तरह का अभाव।

---

१. तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं भेदस्य (अन्योन्याभावस्य) लक्षणम्।

पदार्थानुपसंहरति

सर्वेषां पदार्थानां यथायथमुक्तेष्वन्तर्भावात् सप्तैव पदार्था इति सिद्धम् ।

पदार्थज्ञानस्य परमप्रयोजनं मोक्ष इत्यामनन्ति । स च आत्यन्तिकैकविंशतिदुःखध्वंसः । आत्यन्तिकत्वं च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनत्वम् । दुःखध्वंसस्येदानीमपि सत्त्वेनास्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । मुक्तात्मकदुःखध्वंसस्यान्यदीयदुःखप्रागभावसमानकालीनत्वाद्वामदेवादीनां मुक्तात्मनामप्यमुक्तत्वप्रसंगात्स्वसमानाधिकरणेति प्रागभावविशेषणम् । दुःखानि चैकविंशतिः 'शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेति' । दुःखानुषङ्गित्वाच्छरीरादौ गौणदुःखत्वम् । तथा च 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेरात्मज्ञानसाधननिदिध्यासनमननसाधनत्वं पदार्थज्ञाने संजाघटीति । एवं च तत्त्वज्ञाने सति शरीरपुत्रादावात्मत्वस्वीयत्वाभिमानरूपमिथ्याज्ञानस्य नाशः, तेन प्रवृत्त्यनुत्पत्तिः, ततस्तत्कालीनशरीरेण कायव्यूहेन वा भोगतत्त्वज्ञानाभ्यां प्रारब्धकर्मणां नाशः, ततो जन्माभावः ।

नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत्॥
अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः।

इत्यादिवचनात्'तमेव विदित्वाऽतिमृत्युमेति' इति श्रुतेश्च, सगुणोपासनाकाशीमरणादेरपि तत्त्वज्ञानद्वारा मुक्तिहेतुत्वम्। अत एव परमेश्वरः काश्यां तारकमुपदिशतीति सारम्।

इति श्रीमतत्रभवद्गुरुदत्तसिंहशिष्यश्रीचन्द्रसिंहविरचितं पदकृत्यं समाप्तम्।

न्यायदर्शनशास्त्र में १६ पदार्थ हैं। उन सभी पदार्थों का अन्तर्भाव पूर्वोक्त द्रव्य आदि सात ही पदार्थों में हो जाता है, अतः सात ही पदार्थ सिद्ध हैं।

[ १६ पदार्थ ये हैं—१ प्रमाण, २ प्रमेय, ३ संशय, ४ प्रयोजन, ५ दृष्टान्त, ६ सिद्धान्त, ७ अवयव, ८ तर्क, ९ निर्णय, १० वाद, ११ जल्प, १२ वितण्डा, १३ हेत्वाभास, १४ छल, १५ जाति १६ निग्रहस्थान ]।

काणाद[१] न्यायमतयोर्बालव्युत्पत्तिसिद्धये।

---

१. काणादेति-कणादस्येदं काणादं कणादाभिमतम्, न्यायमतं गौतममुनिमतम्। काणादन्याये च ते मते चेति द्वन्द्वगर्भकर्म-

अन्नम्भट्टेन विदुषा रचितस्तर्कसंग्रहः ॥
इति श्रीमहामहोपाध्यायान्नम्भट्टविरचितस्तर्कसंग्रहः समाप्तः ।



काणाद ( वैशेषिक ) और न्याय ( गौतम ) के मतों में बालकों को सुख से प्रवेश होने के लिए विद्वान् अन्नम्भट्टने इस तर्कसंग्रह नामक ग्रन्थ को बनाया ।

इति श्रीरामचन्द्रझाकृता 'इन्दुमती' टीका समाप्ता ।



---

धारयः । कर्मधारयसमासेन समस्यमानपदार्थयोरभेदसंसर्गलाभः । मतयोरित्यत्र षष्ठ्या विषयतानिरूपकत्वमर्थः । बालानां व्युत्पत्तिरित्यत्र षष्ठ्याऽऽसमवेतत्वमर्थः, सिद्धये इत्यत्र चतुर्थ्याः प्रयोजकत्वमर्थः । समानविभक्तिकनामार्थयोरभेदसम्बन्धेन अन्वय इति नियमः । विदुषेत्यत्र तृतीयायाऽऽसमवेतत्वम्, रचयतेः कृतिरर्थः, क्तप्रत्ययस्य भूतकालिकत्वं विषयतावांश्चार्थः । भूतकालिकत्वस्य कृतौ, विषयतावतस्तर्कसंग्रहेऽन्वयः । एवञ्च काणादन्यायाऽभिन्नमतद्वयविषयकबालसमवेतव्युत्पत्तिसिद्धिप्रयोजकान्नम्भट्टाभिन्नविद्वत्समवेतभूतकालिककृतिविषयाऽभिन्नस्तर्कसंग्रहाख्यो ग्रन्थ इति ।

इति श्रीराजनारायणशुक्लशास्त्रिविरचिता लक्ष्मणटिप्पणी समाप्ता ।



# संस्कृतव्याकरणम्

( रचनानुवादखण्ड, निबन्धखण्ड सहित )

लेखक : पं० रामचन्द्र झा

संस्कृत व्याकरण के सर्वांग का सार इसमें इस कौशल से उपनिबद्ध है कि केवल इस एक ही पुस्तक के अभ्यास से व्याकरण के सब अङ्गों का यथेष्ट ज्ञान प्राप्त हो जाता है। इस पुस्तक में यत्र-तत्र प्रसङ्गानुसार समस्त व्याकरण को हरिकारिका के आधार पर श्लोकबद्ध कर दिया गया है। परीक्षोत्तितीर्षु अल्पवयस्क बालकोपयोगी सरल सुबोध शताधिक संस्कृत-हिन्दी निबन्धों तथा सुभाषितावली आदि का संग्रह भी पुस्तक के अन्त में दिया गया है। परिवर्धित तृ० संस्करण मूल्य ३–५०

---

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी–१